# श्रीमन्महाराज
# संस्कृत-महापाठशाला पत्रिका

## त्रैमासिकी

सम्पुटम् २] जनवरि १९२६ [सञ्चिका १

सम्पादक

महामहोपाध्यायः

पण्डितरत्नम् लक्ष्मीपुरश्रीनिवासाचार्यः




मैसूरु

राजकीय शाखामुद्रालये सम्मुद्रिता

१९२६

॥ श्री ॥

श्रीमन्महाराजसस्कृतमहापाठशालापत्रिका.

# विषयसूचना



महापाठशालाध्यक्ष

## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम –संस्कृतविद्याभिमानिन पुरुषप्रवरा य कचन विषयमधिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकर्मित कस्याप्यनुद्वेगकर अचर्चितपूर्व कालदेशदशानुगुण प्रपञ्चोपकारकर धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकर प्रस्पष्टमुखविल[illegible]पन्यास विलिख्य यदि प्रेषयेयुर्महान्त , तेभ्यो महद्भ्य समर्प्य अन तान् धन्यवादान् पत्रिकायामस्या [illegible]पन्यास पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृश संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

सपादकस्य

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक अग्रिम मूल्य सार्धैकरूप्यक प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२ विद्यार्थिना पुन एकरूप्यकम्
३ विभिन्नदेशे सपादरूप्यद्वयम (3 s ) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यगार्,
श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्ष , मैसूरु

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा



"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"

( ईशोपनिषत् )

सपुट-२] जनवरि १९२६ [सञ्चिका-१

## स्वविषयः

देवो नश्शुभमातनोतु दशधा निर्वर्तयन् भूमिका
रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान्भावान् स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥

अयि महाभागा इदमिदानीमवधारयितुमर्हन्ति तत्रभन्तो भवन्त —चिराय फलितमस्माकमपि मनोरथमहीरुहेण । यन्महीमण्डलमण्डनायमान कर्णाटकजनपदकर्णिकायमान महीशूरराजधानीमध्यविद्योतमान दिव्यरत्नसिंहासनसमासीन श्रीमद्राजाधिराज श्रीमत्कृष्णराजसार्वभौमकृपापोषिता सरस्वतीप्रासादाभिधाना श्रीमन्महाराजसंस्कृतमहापाठशाला बहो कालादन्तर्वत्नीव स्थिता प्रासूत काचन पत्रिकापुत्रिकाम् ॥

अस्या पुन महाभाग्यशालिन्या निर्वृत्त प्रथमाब्दपूर्त्युत्सव । अस्मिंश्च प्रथमे वत्सरे सेय चतुष्पदी प्रचरन्ती पदेपदे स्खलन्तीव सत्यपि निरतिशया मुदमेवावहति मातु मातृबन्धूना सर्वेषामपि ॥

इत परमपीमा विविधभाषाभूषालकारादिभि सकलविधपुमर्थो-पायोपदेशादिभि बहुविधविद्याभ्यासादिभि नैकप्रकारशान्तिदान्त्यादि-कल्याणसमृद्धिभिश्च परिष्करणै काश्चित्कालान् कृतार्थीकर्तुमस्माक साम्प्रतम ॥

अस्या प्रथम शिक्षणीया भाषा गीर्वाणवाण्येव यत्कारण—या खलु भाषा समुपश्लोक्यते सर्वभाषाजननी सर्वालङ्कारभूषिता देवाना वाणीति प्राच्यै प्रतीच्यैश्च सर्वैस्सङ्ख्यावद्भि प्रेक्षावद्भिश्च । यत्र हि कन्दलयत्यमन्दमानन्द अतिमधुररसस्यन्दिसौन्दर्यभाञ्जि वचनानि रसिकजनानाम् । यन्मया एव इतिहासपुराणादय सुहृद इव समुपदि-शन्ति वेदितव्यमवेदितव्य उपादेयमनुपादेय कर्तव्यमकर्तव्य ऐहिक पारत्रिक च । यद्रूपेणैव श्रुतिस्मृतिमुखेन आचार्येणेवोपदिश्यमाना स्वामिनेव सदिश्यमाना भूपतिनेवादिश्यमाना शिष्या इव सादरमव-हिता शृण्वन्ति, दूता इव वार्ता हारयन्ति, भृत्या इव कारित कर्म कुर्वन्ति । अस्या किल वाण्यामन्यादृशी समासव्यासधोरणी । अस-दृशो भावपारिष्वङ्ग विलक्षणो व्याख्यानव्याख्येयभाव अतिगभीरो मीमासान्यायसचार अतिसूक्ष्मरूपा व्याकरणसरणि बहुदुरूहा तर्कप-रिपाटी दुर्ज्ञानतम-वेदान्तशास्त्रतत्त्वम् ॥

किं बहुना—मानवजन्मसाफल्यदायिनीय भाषेति सूरिभिर्वि-क्रान्त, नास्माकमवशिष्यते किंचिदपि वक्तव्यम् । परन्तु अक्षरमाला-भ्यासोऽप्यस्या भाषाया पञ्चाक्षरीमष्टाक्षरीं वा समाश्रित्यैव प्रचलतीति प्रमोदामहे समावेदयितुम् ॥

अपिचास्या भाषाया योऽय साहित्यभाग स खलु नवीन एव प्रपञ्च इति न केवलमस्माभिरुत्प्रेक्षितव्यम् । उक्तमेव ह्यालङ्कारिकै

नियतिकृतनियमरहिता ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरा निर्मितिमादधती भारती कवेर्जयति ॥

इति । अत्र नियतिकृतनियमरहिता निर्मितिमित्यनेन विलक्षणप्रपञ्चसृष्टिरिति व्यक्तम् । स खलु भाग तत्प्रपञ्चवासनावतामेव हृदयङ्गम इति नैवाय द्वेष , यत "अनुभवरसिको विजानाति" इति प्रसिद्ध एवैष आभाणक ॥

यश्चापि शास्त्रभाग तत्र भूयसा शब्दव्युत्पत्तिसमर्थनेन तद्विभजनेन तदर्थपरिष्करणेन तत्र च प्रमाणोपन्यासेन च प्रबन्धस्य त्र्योंऽशा परिपूर्णा । तुरीयोऽपि भाग शब्दानामाडम्बरेण केवल कबलित इव दृश्यते न पुनस्तत्त्वनिरूपणेनेति विलक्षणवासनाशालिना अलसानामालाप ॥

यत शब्द एव सर्वार्थनिरूपणनिदान आससार प्रवाहरूपेण विपरिवर्तत इति नस्सम्प्रदाय । शब्दशिक्षणमूलकमेव निरूपण प्रामाणिकपदवीमर्हत्यधिरोढुम् । प्रभवति च विश्वोऽपि जन तत्र विश्वसितुम् । अतश्शब्दाना शिक्षणमादिम, प्रमाणप्रदर्शन, द्वितीय, तत्त्वनिरूपण तृतीय, प्रयोजननिरूपण तुरीयमिति साम्प्रदायकी दिक् ॥

भाषातत्त्वे तु ईश्वरमूलकत्ववाद , नैसर्गिकत्ववाद , ध्वनिमूलकत्ववाद , परस्परसविद्वाद , वर्गीकरणवाद , धात्ववस्था, समासावस्था, प्रत्ययावस्था, अव्ययावस्था, सकीर्णावस्थेत्याद्या अवस्थावादाश्चेत्युत्प्रेक्षा परीक्षकाणा नाद्यापि विश्राम्यन्तीति विदितमेवेत्यन्यदेतत् ॥

मन्यन्ते च प्राञ्चोऽर्वाञ्चोऽपि सस्कृतभाषाभ्यासेन सर्वदेशकालदशापुरुषसाधारण सनातन परमो धर्म मातृपितृगुरुदैवसेवादिलक्षण

बालाना विनेयाना प्रथमतर धियमधिरोहतीत्येतदेव भारतवैभवमिति ॥

कथयन्तु नाम मन्दभाग्या केचन सस्कृतविद्याभ्यासेन वैनयिक्या सपदा स्वाभाविकी समृद्धि प्रतिहन्यते । प्रकृतिमनोहरपशुपक्षितरुलताप्रसूनप्रदर्शनादिभि तत्तद्वस्तुस्वभाववर्णनामयैरेव पाठादिभि बाला स्वभाववादेनैव समुन्नेया न पुनरीश्वरवादेन विनेया इति ॥

अनुरुध्यामहे तमपि पन्थान कस्या चिद्दशाया कांश्चित्कालान् । न खलु पुनस्सर्वदा, पश्वादिभ्योऽविशेषप्रसङ्गात्, प्रत्यक्ष हीद सर्वेषा विदुषामविदुषामपि ॥

भिप्रयन्ति केचन महाभागा —भाषा याकाऽपि भवतु, विद्या सपादनीया श्रेयस्कर कर्तव्य सुख चानुभवितव्यमित्यूर्ध्वबाहवो विरुवन्त । वय पुन फलवत्यै विद्यायै समधिगन्तव्यायै रोचामाहे । फल हि विद्याया विनयो विवेकश्च, यस्मात् नैव किल मन्यते लोक कश्चिदपि विद्यावन्त विना बहुमाननीय कचिदपि । विद्यावतो लोक एव मित्र वसुधैव कुटुम्ब सत्यमेव सन्तति निरनुरोधो निराक्षेप निर्दोषो निर्विकल्पो महिमा महीयान् ॥

यदि विदितविद्योऽपि विनयविवेकविकल स हि निर्धूमो वह्नि निष्पतन्नशनि निर्दशन्नुरग निष्प्रतीकारो द्रोह निर्निमित्त वैर गृहीतरूप कृतान्तमिव मन्यमाना दूरतो दृश्यमानादपि तस्मात् बिभ्यति साधव । अत एवोक्त महर्षिभि —

यच्छ्रुतं न विरागाय न धर्माय न शान्तये ।
सुबद्धमपि शब्देन काकवाशितमेव तत् ॥
शमार्थं सर्वशास्त्राणि विहितानि मनीषिभि ।
तस्मात्स सर्वशास्त्रज्ञ यस्य शान्त मनस्सदा ॥

नाच्छादयति कौपीन न दशमशकापहम् ।
शुन पुच्छमिवानर्थ पाण्डित्य धर्मवर्जितम् ॥

इति ॥

अत्र च विविधाधिकारिसपूर्णे प्रपञ्चे समुपजायमानास्सर्वेपि जना महाभाग्यशालिन आमुष्मिकैकप्रवणा विरागिणो मुमुक्षव शान्ता दान्ताश्च सन्तीति नैव नाम कश्चित् परीक्षकोऽर्हत्यवधारयितुम्। पर तु ऐहिकसुखाभिलाषिण एव विचेष्टन्ते प्रायेण मनीषिणोऽपि। अतश्चैहिकसुखसपत्तिसाधनीभूता एव विद्या प्रथम विचारणीया परिष्करणीयाश्शिक्षणीयाश्च भूयसामनुग्रहाय । तत्रादौ देशकालविज्ञानमावश्यकम् । उक्त हि—

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्त प्राज्ञो जानाति नेतर ॥

इति । अत कालदेशदशानुरोधेन लौकिक्य एव शैल्पिकभौतिकाद्या विद्या समुपादेया, नानीदृश्य लोकसतानसमृद्धिविनाशिन्य इति यत् तत् केवलमर्थकामपराणामुत्प्रेक्षितम् ॥

नैव खलु वय तेभ्योऽप्यभ्यसूयाम । तत्र कैवल्याय पर क्रुध्याम । यत अल्पत्वास्थिरत्वादिसर्वविधदोषदूषित सर्वैरपि शास्त्रनिचयै प्रथम हेयतया समुपदिश्यमान शरीरमेवाद्य साधन सर्वेषा धर्माणा किमुत तदनुबन्धिनी लोकसन्तानकारिणी सपदेषा लौकिकी। लौकिक्या एव हि सपदो रूपान्तरमिद वैदिकी सपदिति या केवलस्वार्थपरताभिमानपरित्यागेन परोपकाराय सपत्स्यत इति । यत —

अय लोको यस्य नास्ति कुतस्तस्य परो, यत ।
शुचीना श्रीमता गेहे योगभ्रष्टोऽपि जायते ॥

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।
इत्याह भगवान् तस्मादर्थं कामोऽप्यपक्षित ॥

इत्यल प्रसक्तानुप्रसक्त्या रसिकजनानामुद्वेगमुपजनयन्त्या ।

प्रार्थयामहे वयमिदमिदानीं–यदेतत्, भगवतो जगदीश्वरस्याभिप्रायेण ग्राहकमहाशयानामनुग्रहेण च अस्या पत्रिकाया प्रथम एव सवत्सरस्समतीत । तत्र च नैकै प्रकारै अपराधिनो वय श्रीमता ग्राहकाध्यक्षमहाशयाना सदेशे । न खलु गच्छतो जनस्य न भवत्येव स्खलन क्वचित् क्वचित् । विशेषतस्त्वेतादृशाना जनाना, यत्सत्य बहूनि स्खलितानि समुत्पद्येरन् इत्यत्र न कोऽपि विस्मयावकाश । मर्षयन्तु भवन्त कृपयाऽस्माक तास्तानपराधान् इति ॥

वाचकमहाशयाना निरासितु वैमनस्य सपादयितु सौमनस्य प्रयस्यन्तोऽपि नैवेदानीं समीहितमध्यगच्छाम । कोऽत्रापराध्यतीति न वय जानीम । प्रभवत्यपि देवे न नाम वय विसृष्टपुरुषकारा सर्वदा सर्वथा तदेव आराधयाम । जगत्यामिह प्रयुक्तेषु प्रयत्नेषु केचन सफला केचन विफलास्सभवन्तीति विदितमेवैतत् । नहि तथापि न तान् पुन पुन प्रयुञ्जते पत्रिकापरिचालका । अस्ति खल्वस्माक द्रढीयान् विश्वास , यदागामिनि वर्षे तेते दोषा न पुन कबलयेदस्माक पत्रिका, यदि श्रीमता ग्राहकाणा तथाविधोऽनुग्रहरसो नापचीयेतेति ॥

अत्र खलु पत्रिकाया निखिलमानवाचारपथमनतिक्रान्ताना श्रुतिस्मृत्यादिसमधिगताना धर्मविशेषाणा स्वरूपादिनिष्कर्षा निखिलगुरुपरपरासमागतसमाचारसम्प्रदायनिष्कर्षाश्च निरूपिता इति जानन्त्येव भवन्त ग्राहकमहाशया । पर तु संस्कृताङ्ग्लभारतीविज्ञाननिष्णातैश्च महाशयै औपदेशिकीं दृष्टिं विहाय केवला व्यावहारिकीं दृष्टिमवलम्ब्य कृताया क्रियमाणाया करिष्यमाणाया च मीमासाया यथायथा सिद्धा-

न्ता सपत्स्यन्ते तादृशैस्सिद्धान्तैस्सार्ध औपदेशिकाना सिद्धान्ताना सामरस्य यावद्दूर निवर्तते यावद्दूर च वैरस्य व्यज्यते? वैरस्यास्पदेषु विषयेषु यावानर्थ यावाश्चानर्थ लोकस्य? महीयसोऽनर्थस्यासभवे ते उभे अपि औपदेशिकी व्यवहारिकी च दृष्टी किं समीकर्तु शक्ये आहोस्वित् नैवाशक्ये? इत्यादिना विचारेण लोकानुग्रह वेदानुग्रह च कर्तुं अनुपयुक्तेषु विषयेषु लौकिकाना वैदिकाना च महाशयाना दृढपूर्वश्रुतत्वादिमूलानाग्रहान् निग्रहीतुमेवैष पत्रिकाया उद्यम । नपुनरौपदेशिकीमेव दृष्टिं समर्थयितुमित्यादावेवाभ्यसूचयाम ॥

अद्यपर्यन्त पत्रिकामेना परिपोषयता वाचकमहाशयाना सदयहृदयाना परममादरातिशय कृतज्ञतानिवेदनपूर्वक अभीक्ष्णमभिनन्दामहे । परतु ग्राहकमहाशयसख्या नैवातिशते सार्धचतुश्शतीमिति सकुचामो विज्ञापयितुम् । अभ्यर्थयामहे पुन पुन सा सख्या वर्धतामभिवर्धतामनुग्राहकग्राहकमहाजनाना विविधसाहायकविधानेनेति ॥

अपरचेद नात पर प्रियमस्ति, यत्—प्राथमिक्यास्सचिकाया पुटसख्या केवल द्वात्रिंशत् द्वैतीयीक्यास्तु द्विचत्वारिंशत् तार्तीयीक्या पर सप्तचत्वारिंशत् चातुर्थिक्या पुन पञ्चाशत् । एव क्रमेण प्राय पत्रिकाया समुपचीयमानापि पुटसख्या ग्राहकमूल्य पर यथापुरमेव व्यवतिष्ठते इति ॥

किमनेन बहुनोक्तेन प्रसीदतु तथा भगवान् विश्वेश्वर प्रसीदतु च ग्राहकानुग्राहकनिकर , यथा स्वल्पेनैव कालेन पत्रिकेय मनोज्ञतरा वाचयता महाशयाना चित्तमनुरञ्जयन्ती कयाचन विधया विश्वमुपकुर्यादिति विश्वतोमुख भद्रम् ॥



॥ श्री ॥

## वैदिकधर्मप्ररोचनम्.

ब्रह्माणं नाभिपद्मे प्रविदधदखिलं वेदमस्मै प्रहिण्वन्
सृष्ट्वा बह्वीः प्रजा अप्युपदिशति ततस्ताभ्य आम्नायधर्मान् ।
सद्वाराद्वारभेदादथ सकलजनैरर्चितोऽभीष्टदाता
योऽसौ पद्मासहायस्स मम हयशिरा मानसे सन्निधत्ताम् ॥

### धर्मपदार्थः

अयि महाशयाः विदितमेव तत्रभवतां भवतां यद्वैदिकधर्माननुतिष्ठन्तः पुरुषाः सकलविधं श्रेयस्समाप्नुवन्तीति । ननु धर्मानिति साधु । तत्र वैदिकेति का वार्ता । कुशलैव । आह जयन्तः "ननु लोकप्रसिद्धित एव धर्माधर्मसाधनानि कर्माणि ज्ञास्यन्ते, किं शास्त्रेण । उपकारापकारौ हि धर्माधर्मयोर्लक्षणमिति प्रसिद्धमेवैतत् । तदाह व्यासः —

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणां अल्पं शास्त्रप्रयोजनम् ॥

इति । नैतद्युक्तं—लोकप्रसिद्धेर्निर्मूलायाः प्रमाणत्वानुपपत्तेः । लोकप्रसिद्धिर्नाम लौकिकानामविच्छिन्ना स्मृतिः । स्मृतिश्च प्रभवन्ती प्रमाणान्तरमूला भवति न स्वतन्त्रेत्यवश्यमस्या मूलमन्वेषणीयम् । तच्च प्रत्यक्षादि नोपपद्यत इति नूनं शास्त्रमूलैव लोकप्रसिद्धिः विरुद्धानेकप्रकारत्वाच्च लोकप्रसिद्धेः न तस्याः स्वतन्त्रायाः समाश्वसिति लोकः । न चोपकारापकारमात्रलक्षणादेव धर्माधर्मौ वक्तुं युज्यते, जपसीधुपानादौ

तदभावात् । गुरुदारगमनादौ च विपर्ययादित्यवश्य शास्त्रशरणावेव तावेषितव्याविति" ॥

ननु 'धर्मो विश्वस्य जगत प्रतिष्ठा' इति श्रुति 'धृङ् अवस्थाने' इत्यस्मात् 'अर्तिस्तुसु-' इत्याद्यौणादिके मन्प्रत्यये धर्मशब्दनिष्पत्तिमभिप्रैति । अवस्थान च प्रकृष्टस्थितिरिति च । सा च सुखरूपा यत —

'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु'

इति । कोशकारो विश्व धृतिशब्द तुष्ट्यर्थक बभाण । अत एव जैमिनिसूत्रविवरणकारा 'धृति प्रीति तत्साधन धर्म' इति निरवोचन् । यद्येवमनृतभाषणचौर्यादिक धर्मपदमाढौकमान को वा निरुन्धे । 'अन्यायेन वृत्तिलाभ, अनृतेन व्यवहारजय' इति हि कलिवृत्तप्रकरणे पौराणिकानामप्याभाणक । अपि च अय धर्मोऽय धर्म इति यत्त्वार्या क्रियमाण प्रशसन्ति स धर्म । यद्गर्हन्ते सोऽधर्म" इति बहुजनप्रशसार्हमेव धर्म व्यवस्थापयन्नापस्तम्ब कथ वैदिकमेव धर्ममनुमनुते । अत शास्त्रप्रसिद्ध एव धर्म इति साङ्केतिक वचनम् इति ॥

अत्रेद प्रतिवचनम् । य सुखसाधनमनुशास्ति शास्त्रम्, स एव धर्म॰ शास्तीति हि शास्त्रम् । शासन चाज्ञारूपोऽभिप्राय । आज्ञापयिता विचित्रतमविविधप्रपञ्चस्रष्टा सर्वज्ञ सर्वशक्तिस्सर्वेश्वर । न तदितरोऽल्पज्ञानशक्ति आधुनिको राजादिरपि । तच्छासनावबोधी च वेद । यथाह भगवान् स्वयमेव—"श्रुति स्मृतिर्ममैवाज्ञा" इति । मनुरपि —

'विद्वद्भिस्सेवितस्सद्भि नित्यमद्वेषरागिभि ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्त निबोधत' ॥

इत्यत्र ईश्वराभिप्रायावबोधिवेदपर हृदयशब्द प्रायुङ्क्त । 'हृदय वेद इति तद्व्याख्याता मेधातिथि ।

विष्णुरपि—

'पुराण मानवो धर्म साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभि ॥'

इति । पुराणादीन्यपि सर्वेश्वरस्याज्ञासिद्धान्यावेदयति । तत्र श्रुतिस्सा-क्षात्तदादेश । स्मृत्यादिक तु तदनुविधानात् इति । एव च यथा मातापितरौ हिताहितविवेकविधुरान् स्वात्मजाननुशिष्ट तथा सर्वेश्वरो-ऽपि स्वेच्छ्रष्टान् तथाविधान् प्राणिन श्रुतिमुखेन समनुशास्ति । तदुक्त 'वेदाच्छास्त्र पर नास्ति' इति । 'शास्त्र हि वत्सलतर मातापितृसह-स्रत' इति च । आपस्तम्बस्मृतौ च आर्याश्शास्त्रज्ञा एव तदाह विश्वामित्र — 'यमार्या क्रियमाण तु शसन्त्यागमवेदिन' इति । इतरथा अनृतवादिभूयिष्ठे कलौ अनृतभाषणादिकमेव परमो धर्म आपद्येत, इति । यथाहि आत्मजेष्वतीववत्सलाऽपि माता तदात्वे सुखमादधानान्यपि पारि-णतौ देहव्यथाकारीणि फलादीन्यभिवाञ्छतो व्यामुग्धास्तनयान् 'हस्त भिनद्मि' इत्यादि निष्ठुरोक्तिभिस्ताडनादिभिश्च वारयति तादृशेभ्य फला-दिभ्य एव सर्वस्य शरण सुहृत्सर्वेश्वरोऽपि 'नानृत वदेत्' 'समूलो वा एष परिशुष्यति योऽनृतमभिदधाति, यथाऽसिधारा कर्तेऽवहितामपक्रामेद्युवेयुवेहवाविह्वदिष्यामि कर्त वदिष्यामीत्येवमनृतादात्मान जुगुप्सेत्' इत्यादिश्रुतिभि तत्कालामोदकारिभ्योऽप्यायतौ विषतुल्येभ्योऽनृतभाष णादिभ्य पुरुषान्निवर्तयति । अथ च 'सत्य वद' इत्यादिभि सत्यवच-नादिकमाज्ञापयति । अतोऽनृतभाषणादिक न धर्मपदमाक्रमितुमर्हति इति ।

### अधिकारविचार

एतेन 'अथहास्य वेदमुपशृण्वतस्त्रपुजतुभ्या श्रोत्रप्रतिपूरण-मुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद' इति सूत्रयिता गौतमो यदीदानीमवर्तिष्यत, तदा 'विदुषोऽतिक्रमे दण्डभूयस्त्वम्' इत्यस्य

स्वयमेव प्रथममुदाहरणमभविष्यत् । अत ईदृशा ऋषीणा वचनानि कथ प्रमाणभावमातिष्ठन्ते इत्यस्थाने व्यामोहोऽप्यपोदित । फलविशेषभक्षण बालाना केषाचित् वातपित्तश्लेष्मस्वेकैकव्याकोपत शारीर दु खमुत्पादयति । अधर्मानुष्ठान तु सर्वेषा न तावतैव विरमति । अपि तु आत्मदीप यथावदर्थान् प्रकाशयन्त्या ज्ञानप्रभयाऽससृष्टमाकलयति । अथ चेतनानत्युत्कटाजय्यकामादिमहावेरिपरवशानारचयति ततो निमज्जयति महादु खसागरेऽपीति । यथाह भगवान् काममहिमानम्—

काम एष क्रोध एष रजोगुणसमुद्भव ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥

इति । व्यासोऽपि—

तृष्णाखनिरगाधेय दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तै' पूरणैरेव खन्यते ॥

इति । यश्च महावीरमपि महावैरिण काममध कुरुते स एव महापुरुषः परमसुखीति च · स एवाह—

यच्च कामसुख लोके यच्च दिव्य महासुखम् ।
तृष्णाक्षयसुखस्यैते नार्हत षोडशीं कलाम् ॥

इति । ययातिरत्र साक्षी सर्वलोकविदित एव । 'सन्तोषादनुत्तमसुखलाभ' इति पातञ्जल सूत्रमपि 'संन्तोषमूल हि सुख दु.खमूल विपर्यय' । इति च मानवं वच ।

एव एकजातीना श्रुतिश्रवणादिकमपीदृशीं दुर्गतिमापादयत्येवेति काऽत्र दौरात्म्यकथा गौतमस्येति । एव वैदिकेषु चत्वारिंशत्सस्कारेष्वप्येकजातेरनधिकारमभिप्रैति सर्वेश्वर इति गौतमादयो॰ जगदु । इत्थ सति ब्राह्मणपुरुषपक्षे पतन् सर्वेश्वर कथ मातृप्रतिनिधि विश्वसनीयवचन कथ वा तदाज्ञामनुयान्ति लोका इत्येकजातिपक्षपातिनमपि

सर्वेश्वर ये द्विजातिपक्षपातिन सम्भावयन्ति तान् प्रत्यबोधयत्पराशर —

व्रतचर्यापरै ग्राह्या वेदा पूर्वं द्विजातिभि ।
ततस्स्वधर्मसप्राप्तै यष्टव्य विधिवद्धनै ॥
वृथा कथा वृथा भोज्य वृथेज्या च द्विजन्मनाम् ।
पतनाय ततो भाव्य तैस्तु सयमिभिस्सदा ॥
असम्यक्करणे दोष तेषा सर्वेषु वस्तुषु ।
भोज्यपेयादिक चैषा नेच्छाप्राप्तिकर द्विजा ॥
पारतन्त्र्य समस्तेषु तेषा कार्येषु वै यत ।
जयन्ति ते निजान् लोकान् क्लेशेन महता द्विजा ॥
द्विजशुश्रूषयैवेह पाकयज्ञाधिकारवान् ।
निजान् जयति वै लोकान् शूद्रो धन्यतमस्तत ॥
भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वै यत ।
नियमो मुनिशार्दूल तेनासौ साध्वितीरित ॥
योषिच्छुश्रूषणाद्भर्तु कर्मणा मनसा गिरा ।
तद्धिता शुभमाप्नोति तत्सालोक्य यतो द्विजा ॥
नातिक्लेशेन महता तानेव पुरुषो यथा ।
तृतीय व्याहृत तेन मया साध्विति योषित ॥

इति । यथा च लोके महाराज तत्तत्पुरुषदेहपाटवबुद्धिशक्त्यनुगुणानेकविद्यालयानुपकल्प्य तत्तदधिकारानुगणमभ्यस्तविद्यान् कर्मसु प्रवर्तयस्तेषा समुचितं फल प्रददाति तथैव सर्वलोकाधिपतिरपि तत्तदधिकारानुगुण प्रकल्प्य विद्या परिचाय्य च ता पुरुषान् यथार्ह सफलीकुरुतेऽपि तानिति ।

किं च रुग्णौ द्वा स्वस्व रोग परिजिहीर्षन्तौ वपु पुपोषयिषन्तौ कचिच्चिकित्सकमभिगच्छत तयोर्देहतत्त्वादिक सम्यगवधारयश्चिकि-

त्सक कस्मैचिद्बहुलश्रमकर भक्ष्यद्रव्यादिनियममादिश्यौषध प्रयच्छति अन्यस्मै चादनीयादिनियमवर्जम् । तत्र यद्यन्य स्वस्य तादृशनियमविरहेण इष्टासिद्धिमभिमन्यमान चिकित्सकेऽपि पक्षपातितामारोपयन् तादृश नियममन्वष्ठास्यत् तर्हि महती शरीरव्यथामप्राप्स्यत् । एवमेकजातिरपि स्वस्य वेदाद्यनुशासनेन सर्वेश्वरे पक्षपातमध्यारोपयन् श्रुतिश्रवणादिक चत्वारिंशत्सम्काराश्चाकरिष्यत् तदाऽवक्ष्यदेव महती मनोव्यथामपीति ।

## साधारणधर्मे

अतस्सर्वोत्तमान् धर्माननुतिष्ठन्तो निरातिशय श्रेयो लप्स्यन्ते चत्वारिंशत्सम्कारविधुरा अप्येकजातय । ताश्चेत्थ सस्मार गौतम — "अथाष्टावात्मगुणा । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा" इति । अत्रात्मगुणपदेन सर्वसाधारणधर्मान् व्यपदिशन्नयमिममाशयमभिव्यनक्ति—तत्तदवयवसन्निवेशादि भेदभिदुरेष्वपि सर्वेषु शरीरेषु प्रकाशात्मकमात्मस्वरूपमेकरूपमेव । यथा विचित्रतपसास्नाशृङ्गादिवर्णविन्यासवतीनामपि गवा शरीरान्तरे क्षीर श्वेतमेकरूप तथा च श्रुति —

गवामनेकवर्णाना क्षीरस्य त्वेकवर्णता ।

क्षीरवत्पश्यति ज्ञानम् ॥

इति । सुषुप्तौ च सर्वेषामेकरूप सुख अनुभवप्रासादमध्यारूढ को वा निरोद्धुमीष्टे । 'सुखमहमस्वाप्सम्' इति सुप्त्यनन्तरमाबालगोपाल प्रतिसन्धि । अनन्यसाधारणा एव धर्मा एकरूपमात्मतत्त्वमनुबध्नन्त आत्मगुणपदमलमकार्षुरिति । तदाह बृहस्पति —

दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।

अकार्पण्यास्पृहत्वे च सर्वसाधारणा मता ॥

इति । एते च वैदिकाश्चत्वारिंशतमपि संस्कारानतिशेरत इति गौतम एव बभाण —यस्यैते चत्वारिंशत्संस्कारा नचाष्टावात्मगुणा न स ब्रह्मणस्सायुज्यं सालोक्यं च गच्छति । यस्य तु संस्काराणामेक- देशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणस्सायुज्यं सालोक्यं च गच्छति" इति । एवं सर्वसाधारणानेव धर्मान् द्विजातीनामपि स्वसाधारणे- भ्यश्चत्वारिंशत्संस्कारेभ्य अभ्यर्हिततमानुद्घोषयन्नपि गौतमो यदि दण्ड्यस्थानमध्यष्ठास्यत् तदा को वा महापुरुष समानपदमलमकारि- ष्यदिति ॥

धर्माश्चैते नव इति याज्ञवल्क्य । दश इति मनु (६ ९ २) । एकादश इति भारते शान्तिपर्वाणि (१०९ २७६) व्यास । चतु- र्दश इति (३ ८) पराशर । एवमेव विष्णुस्मृतावपि । एतत्प्रपञ्च- काष्ठा च भागवते प्राकाशयद्व्यास (७ ११)—

सत्यं दया तपश्शौचं तितिक्षेक्षा शमो दम ।
अहिंसा ब्रह्मचर्यं च त्यागस्स्वाध्याय आर्जवम् ॥
सन्तोषस्समदृक् सेवा ग्राम्येहोपरमश्शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥
अन्नाद्यादेस्संविभागो भूतेभ्यश्च यथार्हत ।
तेष्वात्मदेवताबुद्धि सुतरां नृषु पाण्डव ॥
श्रवणं कीर्तनं चास्य स्मरणं महतां गते ।
सेवेज्यावनतिस्सख्यं दास्यमात्मसमर्पणम् ॥
नृणामयं परो धर्म सर्वेषां समुदाहृत ।
त्रिंशल्लक्षणवान्साधु सर्वात्मा येन तुष्यति ॥
संस्कारायं ह्यविच्छिन्नस्सद्विजोऽजो जगाद यम् ॥

इति । अत्र सत्यमुपक्रम्यात्मसमर्पणमुपसंहरन्नयं तैत्तिरीयोपनिषन्नारायणी-

यगत "सत्यपरम्" इत्याद्यनुवाकद्वय मूलमालम्बे। तत्र च सत्यतपोदमशमदानधर्मप्रजननाग्निहोत्रयज्ञमानसन्यासान् सङ्कीर्णान् धर्मान् विभज्य प्रादर्शयत्। 'सत्य वद धर्म चर। स्वाध्यायान्माप्रमद' इति श्रुतिरप्यत्र मूलम्। अत्र धर्मपद कृत्स्नधर्मपरम् सत्यस्य पृथगुक्तिरभ्यर्हितत्वात्। एव तलवकारिणा 'तस्यै तपो दम कर्मेति प्रतिष्ठा वेदास्सर्वाङ्गानि सत्यमायतनम्' इति श्रुतावपि। यथाह स एव—

अश्वमेधसहस्र च सत्य च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेक विशिष्यते॥

इति। किं च भारते शान्तिपर्वणि २७८ वेदा प्रमाण लोकानाम् इत्युपक्रम्य—

सर्ववर्णेषु यत्त्वेषा नासीत्कश्चिद्व्यतिक्रम।
चतुर्थ औपनिषदो धर्मस्साधारणो मत।
शरीरपक्ति कर्माणि। पन्थानो ब्रह्मणस्त्वेते।

इति वचनै निरतिशयसुखसाधनाना साधारणधर्माणा शरीरसंस्कारकेभ्यो वेदपूर्वभागगतेभ्य कर्मभ्य उत्कर्ष औपनिषदेति नाम्ना स्पष्टीचकार। अपि च जाजलेर्विप्रात्तुलाधारस्य वैश्यस्य, कौशिकाच्च द्विजाद्व्याधजातीयस्य धर्मव्याधस्य अतिशयित ज्ञान धर्म च तत्तदुपाख्यानत प्रख्यापयामास। विष्णुधर्मे च—

भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते।
स विप्रेन्द्रो मुनिश्श्रीमान् स यतिस्स च पण्डित॥

इति। म्लेच्छमपि भगवानेव ज्ञानसौधमारोपयत् स्थिते चेत्थ वैदिकधर्मरहस्ये कुत्र वा पक्षे पतति सर्वेश्वर इति विवेचयन्तु विवेचका॥

यथा च लोके महाराज यथावत्साक्षात्कर्तुमनीश्वरा अपि तत्तद्ग्रामटिकावासिन पुरुषा महाराजप्रीणन तच्छासनमनुरुन्धाना ईप्सि-

तानर्थानाप्नुवन्ति तथा सर्वलोकराजाधिराजस्य नामरूपादिषु मात्रया विप्रतिपद्यमाना अपि सर्वे जना यदि प्राक्तनान् धर्माननुष्ठाय सर्वेश्वर प्रीणयेयुस्तर्हि निश्शङ्कमेव निरतिशयमपि सुख लभेरन्। राजशासनातिवर्तिनश्च यथा दण्डनादि दु खमनुभवन्ति तथाऽधर्ममनुष्ठातारोऽप्याध्यात्मिकमाधिभौतिकमाधिदैविक वा दु खमनुभवन्त्येवेति ॥

**सस्कार**

सस्काराश्चेत्थमन्वक्रामद्गौतम – " गर्भाधानपुसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम्। चत्वारि वेदव्रतानि। स्नान सहधर्मचारिणीसयोग, पञ्चाना यज्ञानामनुष्ठान, देवपितृमनुष्यभूतब्रह्मणामेतेषा च। अष्टका पार्वण श्राद्ध श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसस्था। अग्न्याधेयमग्निहोत्र दर्शपूर्णमासाग्रयण चातुर्मास्यानि निरूढपशुबन्ध सौत्रामणीति सप्त हविर्यज्ञसस्था। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यषोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था ॥ इति। एताश्च विप्राणामकरणे प्रत्यवायेन नित्यानपि तच्छरीरसस्कारकतया सस्कारा इति व्यवजहार। तत्र चोपनयनान्ता बैजिकगार्भिकपापापनोदनद्वारा गायत्र्युपदेशवेदाध्ययनादियोग्यतामापादयन्ति। अन्येऽपि ब्रह्मज्ञानोत्पत्त्यर्हताम् इति। तदाह मनु —

वैदिकै कर्मभि पुण्यै निषेकादिर्द्विजन्मनाम्।
कार्यश्शरीरसस्कार पावन प्रेत्य चेह च ॥
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनै।
बैजिक गार्भिक चैनो द्विजानामपमृज्यते ॥
स्वाध्यायेन व्रतैर्होमै त्रैविद्येनेज्यया सुतै।
महायज्ञैश्च यज्ञैश्च ब्राह्मीय क्रियते तनु ॥

इति। एतेषु केचित् स्वर्गादिफलसाधनतया काम्या अपि।

अयि चित्रायागपुत्रकामेष्टिकारीरीष्ट्यादिकमनुतिष्ठत पुरुषान् पशुपुत्रवृष्टिफलविधुरान् साक्षात्करोषि। अथापि का ते महती श्रद्धा-जडता। सखे किमुपालम्भेन। शृणुतावद्गौतमीय न्यायसूत्रम् "न कर्म-कर्तृसाधनवैगुण्यात्"। इति। अवधेहि चैतदाशयम्। कृषिकरणप्रभृति व्रीह्यादिक फल प्रापयतीति सर्वजनीनम्। तत्र कृषीवल कर्ता यदि तत्परिकरमेव न जानाति, जानन्नपि वा सम्यक्कृषिं कर्तुं न शक्नोति, शक्तोऽपि वा परिकर कृत्स्नमलब्ध्वा दुष्टेषु च साधनेषु कृषिकर्मारब्धयितु न पारयति, तदा न व्रीह्यादिकमभिनिष्पद्यते। न चैतावता कृषि-कर्मणो निवर्तन्ते कर्मकर्तृसाधनगुणसपन्ना पुरुषधौरया, किन्तु प्रकाम प्रवर्तन्त एव। एव चित्रायागादौ प्रयोक्ता चत् अज्ञोऽसदाचारो वा अथ ज्ञानसदाचारसपन्नोऽपि न मम्यग्यागकरणे व्याप्रियते। प्रयोक्तु-स्सम्यक्प्रवृत्तावपि वा हविरसस्कृतमुपहतम्, मन्त्रा वा न्यूनाधिका स्वरवर्णविहीना' दाक्षिणा दुरागता हीना निन्दिता वा तदा न पश्वादि-फल लभन्ते तदनुष्ठातार, न च तावता कर्मकर्तृसाधनगुणसम्पन्ना पुरुषधुर्या परित्यजन्ति चित्रादीनिति। अथान्यावपि मन्त्रायुर्वेददृष्टान्ता-वाचख्यौ वेदप्रामाण्ये स एव। ततोपि न भवदुपालम्भावमर। तत्तद्देश-भाषामया अपि मन्त्रा महापुरुषाभ्यम्ता विषादिबाधामपसारयन्तीति सार्वलौकिकम्। एव वैदिका अपि मन्त्रा।

किं च एक एव चिकित्सक कदाचिद्रुजा झडिति निवर्तयति, कदाचिच्चिर कदाचिच्च नैवेति। इद च न कोऽपि तिरोधापयितुमीष्टे। तत्र वैषम्ये रोगनिदानापरिज्ञान औषधापाटव वा यदि मूल तदा प्रकृतेऽपि याग कर्तृसाधन वैगुण्यादिक मूलम्। फल काकतालीयमिति तर्कणमप्युभयत्र तुल्यमेवेति। एतेन—

नैतद्युक्तिसह वाक्य हिंसा धर्माय चेष्यत।

हवींष्यनलदग्धानि फलायेत्यर्भकोदितम् ॥
यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते ।
शम्यादि यदि चेत्काष्ठं तद्वरं पत्रभुक्पशुः ॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन किन्नु तस्मान्न हन्यते ॥
तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः ।
दद्याच्छ्राद्धं श्रमायान्नं न वहेयुः प्रवासिनः ॥
युक्तिमद्वचनं ग्राह्यं मयान्यैश्च भवद्विधैः ।
इति विष्णुपुराणे (३।१८) मायामोहाक्षेपोऽपि समाहितः ॥

### हिंसाऽऽक्षेपः

अत्रेदं विचारयन्तु सुधियः । यज्ञियपशुहिंसैव दोषः उत प्राणिमात्रहिंसाऽपीति । आद्ये स्वेच्छामात्रमेव शरणम् शपथ एववेति न तिरोहितं विदुषाम् । द्वितीये, अहो निराहाराणामपि वाग्मिता। अन्नादिभक्षणे च 'खण्डिनी पेषिणी चुल्ली उदकुम्भ उपस्करः' इत्युक्तसूनापचकाहितसूक्ष्मक्रिम्यादिहिंसा को वारयिता। किंच नरवध-कारिणा हननशासनमपि राजकीयमपङ्खापद्येत । अतो यत्कर्म स्वस्य परेषां च बहूनां सुखमादधाति, तच्च हिंसामन्तरा न संपत्स्यते तदन्तरेण चेत् पुरुषास्सुखभाजो न भवेयुः, तत्र हिंसा न दोष एवेत्यास्थेयम् । अत एव भिषजामौषधविशेषरचनमपि सुष्ठु । यज्ञस्य च वृष्टिः फलमित्याह भगवान्स्वयमेव—

सह यज्ञैः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥

इति । मनुरपि—

अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठति ।

आदित्याज्जायते वृष्टि वृष्टेरन्न तत प्रजा ॥

इति । एवमेव याज्ञवल्क्यस्मृतावपि "तस्माद्यज्ञे वधोऽवध" इति मन्वादिसिद्धान्त प्राच्च एव व्यवास्थापयन् ।

इति । श्राद्धाक्षेप याज्ञवल्क्य एव समाधत्त—

वसुरुद्रादितिसुता पितर श्राद्धदेवता ।

प्रीणयन्ति मनुष्याणा पितॄन् श्राद्धेन तर्पिता ॥

आयु प्रजा धन विद्या स्वर्ग मोक्ष सुखानि च ॥

इति । अत्र विज्ञानेश्वर — "अधिष्ठातृदेवतासहिता एव देवदत्तादय पित्रादिशब्दैरुच्यन्ते । अतश्चाधिष्ठातृदेवता वस्वादय पुत्रादिभिर्दत्तेन अन्नपानादिना तृप्तास्सन्त तानपि देवदत्तादीन् तर्पयन्ति । कर्तॄंश्च पुत्रादीन् फलेन सयोजयन्ति । यथा माता गर्भपोषणायान्यदत्तेन दोहदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठरगतमप्यपत्य तर्पयति दोहदान्नपानादिप्रदायिनश्च प्रत्युपकारफलेन सयोजयति । तद्वद्वसवो रुद्रा अदितिसुता आदित्या एते पितर पितृपितामहप्रपितामहशब्दवाच्या न केवल देवदत्तादय एव श्राद्धदेवता श्राद्धकर्माणि सम्प्रदानभूता । किन्तु मनुष्याणा पितॄन् देवदत्तादीन् स्वय श्राद्धेन तर्पितास्तर्पयन्ति ज्ञानशक्त्यतिशययोगेन । किंच न केवल पितॄन् तर्पयन्ति । अपि तु श्राद्धकारिभ्य आयु प्रजा धन विद्या स्वर्ग मोक्ष सुखानि राज्य, चकारात् शास्त्रोक्तमन्यदपि फल स्वय प्रीता पितामहा वस्वादय प्रयच्छन्ति" इति । एवमेव विष्णुपुराणे ३, १५, २५ विष्णुचित्तीयविवरणेऽपि यथालोकमपि श्राद्धफल विश्वसनीयमेव । लोके हि बहवो राजान स्वप्रतिनिधिभृत्यादिद्वारा परदत्तसत्कारद्रव्य प्रतिगृह्णाना

स्वनामप्रकाशनपूर्वकं बहुभ्योऽन्नदानादिकं शृण्वन्तो वा सत्कारद्रव्य-दातृभ्यः अन्नदानादिकर्तृभ्यश्च सानुबन्धिभ्यः फलं प्रयच्छन्ति । एव-मेव निमन्त्रितब्राह्मणद्वारा प्रीताश्श्राद्धदेवता वस्वादयो यजमानाय तत्पितृभ्यश्च अभिमतं फलं प्रदास्यन्तीति एवं लोके राजानः अवा-प्तकामास्तत्तद्ग्रामवासिभिरुपहृतानि तत्तदधिकारानुगुणान्युपायनानि कटा-क्षयन्त एव स्वेषु तेषां प्रीतिमाकलयन्तः तदुपहृतवस्तूपभोगमन्तरेणैव तेभ्योऽपेक्षितं फलं प्रयच्छन्ति एवं देवा अपि शम्यादिकं कटाक्षयन्त एव प्रददति । यथाह श्रुतिः, "न ह वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति ।

## कालो देशश्च

ननु चत्वारिंशत्सत्कारप्रशंसनं—

एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ।
मृगतृष्णाऽम्भसि स्नातः खपुष्पकृतशेखरः ॥

इति वचनपरिपाटीमनुसरति । अहो महती ते अक्षमा । यद्वाल सुभिक्षसमये बहुविधैर्धनादिभिर्महाराजेनोपकृतोपि अद्यत्वे वृद्धो भवा-स्तेनैव दुर्भिक्षेऽपि किञ्चिदुपकृतो महाराजमपि प्रद्वेष्टि । किञ्च इदानीं दुर्भिक्षवशादल्पमेव व्रीह्यादिकमभिनिष्पादयत् क्षेत्रवृक्षप्रभृति भवद्वश्येभ्यः महापकारमादधानमपि निन्दापदमेवाध्यारोपयसि अधुनापि चत्वारिंशतिं यथार्हं कांश्चित्सत्कारान्,

सन्ध्या स्नानं जपो होमो देवतानां च पूजनम् ।
आतिथ्यं वैश्वदेवश्च षट्कर्माणि दिनेदिने ॥

इति पराशरोक्तानि कर्माणि चाचरन्तः आत्मगुणपूर्णा निरतिशयं श्रेयो लप्स्यन्त एव ॥

प्राञ्चो यन्महता क्लेशेन साधनेषु प्रयतमाना सुखमविन्दत तदर्वाञ्चस्सुलभैरेव साधनैराप्नुवन्तीति न विशेषतो बोधनीय विबुधानाम्। लोकेऽपि तत्तद्देशकालौ तत्तत्पुरुषशक्त्यादिकञ्च समीक्ष माणा तत्तदर्हेष्वेव सुखसाधनेषु कर्मसु पुरुषान्नियुञ्जते महान्त तथैव सर्वेश्वरोऽपीति। अत्र सन्ध्या अहोरात्रयो सन्धिकाल। तत्र अह इन्द्रियव्यापारकाल, रात्रिश्च तदुपरमकाल इत्याबालगोपाल सुप्रसिद्धमेव। तत्र यदि सर्व कालो दिवैवाभविष्यत् तदा सदेन्द्रियाणि व्यापारयितुमशक्नुवाना पुरुषा न सुखमैषिष्यन्त। यदि च रात्रिभावमलप्स्यत सकलस्समय, तदेन्द्रियव्यापारविधुरा नैव सुखमुपैष्यन्। अत कालद्वय सन्धाय जनानुपकुर्वती तदभिमानिदेवतात्वेन सन्ध्यात्वेनोपदिश्यमाना देवता ह्यर्घ्यजपोपस्थानवन्दनैस्तदात्वे यथायथमाराधनीया। तुरुष्कादिमतनिष्ठा अपि नैतत्परित्यजन्तीति॥

सर्वव्यापकस्य सर्वेश्वरस्य तत्तद्विग्रहेषु पूजनमनुचितमिति मूर्तिपूजामधिक्षिपतो मानुषान् गवारणिव्यजनदृष्टान्तै प्रत्यबोधयन्प्राञ्च एव सहितासु—यथा गवाऽशित ग्रासादिक सर्वत्र देहे व्याप्त क्वचिदेव क्षीरभावेन परिणतमभिव्यज्यते, अरणौ साकल्येन वर्तमानो वह्निर्मथनेन क्वचिदेव दृष्टिपथमवतरति, सदागतिरपि वायु व्यजनेन व्यज्यते—अथ चोपकुर्वन्ति क्षीरवह्निवायव। तथा सर्वव्यापकोपि सर्वेश्वर मन्त्रविशेषै प्रतिष्ठाकरणेन विग्रहेऽभिव्यक्त पूजितश्च यथार्हं पुरुषै प्रापयति तान्पर श्रेय इति।

वैश्वदेव तु आत्मनोऽन्नस्य वा सस्कारकम्। 'खण्डिनी पेषिणी चुल्ली उदकुम्भ उपस्कर' इत्युक्तसूनापञ्चकदोषमपनुदतीति।

ननु वैदिकै प्रतारित प्रकाम भवान् ख्यातिलाभपूजाद्यर्थमेवेय वेदवैदिककर्मकल्पना इति परम रहस्यम्। अहो भवान्वन्ध्याया

अपि रह पुत्र कल्पयति । शृणु तावदापस्तम्बवच "नेम लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् निष्फला ह्यभ्युदये भवन्तीति"। अत्र लौकिकोऽर्थ ख्यातिलाभपूजादिकमेव इति तद्विवरणकारा । ननु सर्वसाक्षिकमपि ख्यात्यादिक फल कथमापस्तम्बोऽप्यपलपति नहि ख्यात्यादिकमपालपदापस्तम्ब । अपि तु वैदिककर्मण ख्यात्यादेरन्यस्मिन् परमफले सुप्रसिद्धेऽपि यत्ख्यात्यादिकमेव वैदिककर्मण परम फल वैदिककर्मानुतिष्ठन्तस्सर्वेऽपि अभिसदधत इति भवदुत्प्रेक्षित तदेव "लौकिकमर्थं पुरस्कृत्य" इत्यनया वाचोभङ्ग्या कर्मानुष्ठातु ख्यात्याद्यभिसन्धि कर्मफलमुन्मूलयतीति हि बोधयत्यापस्तम्ब । अनभिसहितमपि ख्यात्यादिक नान्तरीयकमापततीति स एव समनन्तरमाह 'तद्यथाम्रे फलार्थे निमिते छाया गन्ध इत्यनूत्पद्येते एव धर्म चर्यमाणमर्था अनूत्पद्यन्ते' इति ॥

अत्राम्रवृक्षदृष्टान्तेन कुतर्कैर्धर्मफलादौ सन्दिहानानित्थ प्ररोचयति । ये चाम्रबीज वपन्ति ते समनन्तरमेव न तत्फल प्राप्नुवन्ति । किन्तु कालान्तरे । एव धर्ममनुष्ठातारोऽपि । प्रथममाम्रवृक्षस्य जलसेकदोहदयोजनादिक्लेशसत्त्वेऽपि अतिशयित परिणतौ फलमभिसन्धाय यथा त क्लेश सहन्ते पुरुषा तथाऽत्रापीति । दोहदाद्यविरहे तत्समृद्धावपि प्रतिबन्धकप्रबलतरक्रिम्यादियोगे वा यथाऽऽम्रफलानिष्पत्ति एव धर्मपरिकरविरहे तत्सत्त्वेऽपि प्रतिबन्धकदुरदृष्टादिपरिपाके वा धर्मफलस्याप्यसम्पत्ति । अल्पशक्तिक प्रतिबन्धकमपसारयितु प्रभवन्ति पुरुषा नाधिकशक्तिकमित्युभयत्र समम् । ये चाम्रस्य छायागन्धादिफलमभिसन्दधते तावन्मात्रतुष्टा उत्तमदोहदादियोजने अप्रयतमाना मधुरतमानि फलानि न लभन्ते तद्वत्ख्यातिलाभपूजाद्यभिसन्दधाना अपि तावन्मात्रतुष्ट्या धर्मपरिकरसम्पादनक्लेशमसहमाना

धर्मस्य परमफलान्यतिशयितानि न विन्दन्ते । आम्रवृक्ष प्ररोपयितार स्वपुत्रपौत्रादिभिस्सह यथाऽऽम्रफलमुपभुञ्जते । तद्वदेव धर्ममनुष्ठातारोऽपि धर्म्मफलम् । आम्रवृक्ष प्ररोपयत तत्फलान्यनवलोकयतोऽपि पुत्रा पौत्राश्च यथा तत्फलमनुभवन्ति एव धर्ममाचरतस्तत्फलमननुभवितु पुत्रा पौत्रा अपि । यथा ह्येक आम्रवृक्षमारोपयति फलानि च तद्देश-वासिनम्सर्वे उपभुञ्जते तथा धर्ममेकोऽनुतिष्ठति फल च तद्देशस्था अपि सर्वे उपभुञ्जते । क्षेत्रविशेष एव आम्रवृक्षा फलानि प्रसुवते न सर्वत्रेति सर्वजनीनम् । तद्वद्धर्मभेदोऽपि देहविशेष एवेति । आम्र-वृक्षप्ररोपणानर्ह क्षेत्र जानाना अजानाना वा पुरुषा पुरातनानन्य-वृक्षानुत्पाट्य यद्याम्रतरून् प्ररोपयेयुस्तदा पुरातनफलेभ्य प्रच्युता आम्रफलान्यपि नालोकयन्ति । तद्वद्धर्मविशेषानुष्ठानानर्ह स्वस्वदेह-माकलयन्तोऽनाकलयन्तोऽपि वा तमेव धर्ममनुतिष्ठन्त प्राक्तनधर्मफला-द्भ्रश्यन्त प्रक्रान्तधर्मफलमपि नाभिवीक्षन्ते । तत्रैव पुनर्यथा पुरातन-वृक्षा आरोपिता अपि क्षेत्रस्य दोषेण न यथावत्फलानि प्रसुवते । एव तत्रैव पुन प्राक्तनधर्मोऽनुष्ठितोऽपि तथैव । यथा आम्रवृक्ष प्ररोपयिता तत्फलस्य स्वार्थताबुद्धि परित्यजस्तद्देशाधिपाय राज्ञे समर्पण-मभिसन्धत्ते तदा तदनुग्रहेण अतिशयितदोहदादियोजनेन मधुरतमा-न्याम्रफलानि अन्यानप्यभीप्सितानर्थानवाप्नोति तत एव राज्ञ , तथा धर्ममनुष्ठाताऽपि विहाय स्वार्थताबुद्धि यदि फलादिकमीश्वरे अर्पयति तदा कतकरजसेव सलिलकालुष्य निवृत्तिधर्मेण रजस्तमसी अभिभूय समेधय्य च सत्त्व विस्तार्य चात्मदीपस्य ज्ञानप्रभा आरुह्य च प्रज्ञाप्रासाद निरवधिकानन्दे निमज्जतीति ।

### धर्मव्यतिक्रम

ननु "कतकभरद्वाजावन्योन्य व्यत्यस्य भार्ये जग्मतु , वसिष्ठश्च-ण्डालीमक्षमालीं, प्रजापतिश्च स्वा दुहितर" इत्यादि धर्मव्यतिक्रममा-

चरन्ति परेषा धर्मोपदेष्टारोऽपि परमर्षय । अत एवाहुर्लौकिका अपि 'स्वस्वानुष्ठानसमये मुनयोऽपि न पण्डिता " इति । एवमन्यान्यपि एतादृशचरितानि पुराणादिषु प्रसिद्धान्येव । अत एतदुपदेशाद्युप्रज्ञ धर्मफल कथ पुरुषा प्रतियन्तीति? अयि मुग्ध कुतो महापुरुषानाधिक्षिपसि । मोह चेममपाकार्षुरापस्तम्बादय एव "तेषा तेजोविशेषेण प्रत्यवायो न विद्यते । तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवर " इत्यादिना । युक्तं चैतद्यथालोकमपि । स्वस्वग्रामात्प्रचलितौ वैद्यस्तदितरश्चेत्युभावपि कस्मिंश्चिद्देशे मिळित्वा तत्र रोगनिदानदूषितमन्नादिकमलभेताम् । तच्च प्रथम वैद्योऽभक्षयत् । अथ तदितरोऽपि । ततो यथायथमगच्छताम् । तत पीडितो वैद्यस्तत्प्रतीकारमारचय्य सुखितोऽभूत् । तदन्यस्तु तत्प्रतीकारानभिज्ञ परा बाधामवापेति । एव महता धर्मव्यतिक्रम सञ्चिन्त्य यदि वय धर्म व्यत्यस्येम तदा परा बाधा लभेमहि । किं च मारीरोग (कालरा) जलस्थक्रिमिसम्बन्धाज्जायत इति हूणवैद्या प्रवदन्ति । एकसदनस्थैस्सर्वैरविशेषेण जलपानेऽपि काश्चिदेवरोग पीडयति । तत्रापि कश्चिदेव म्रियते नान्य इति वैषम्ये निदान चेत्थमाचक्षते–येषा देहस्था क्रिमयोऽधिकशक्तिमत्त्वेन रोगक्रिमीन्ग्रसन्ते त एव म्रियन्ते—इति च । तद्वन्महता तेजोविशेष एव धर्मशक्तिमधरीकरोतीति न तेषामनिष्टप्राप्ति । अस्माक तु तादृशतेजोविरहणाधिकंतरदु खप्राप्तिरनिवार्यैवेति ॥

ननूक्तान् धर्मानकुर्वन्त आचरन्तश्चाधर्मान् सकलसम्पत्समृद्धा एव बहवो दृश्यन्त इति कथमधर्मो दु खसाधनमिति प्रतियन्ति जना इति । अस्याप्युत्तरमापस्तम्बादिभिर्दत्तप्रायमेव मनुश्चाधर्मफल विशदय न्निममाक्षेपमुदमूलयत्—

> नाधर्मश्चरितो लोके सद्य फलति गौरिव ।
> शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥

यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ।
न त्वेव तु कृतोऽधर्म कर्तुर्भवति निष्फल ॥
अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।
ततस्सपत्नान् जयति समूलस्तु विनश्यति ॥ इति ॥

अत्रेदमाकूतम् । लोकेऽसत्यार्थपत्रिकाकल्पकास्तस्कराश्च केचिद्द्रागेव राजदण्डनभागिनो भवन्ति । केचिच्च विलम्बेन । अपरे च केचिद्राजभृत्यनयनपथादिकमतिवर्तमाना दण्डनविदूरा एधमाना एव दृश्यन्ते । तत्पुत्रपौत्राश्च तदीयपत्रिकाधनादियोगिनस्तत्फल दण्डनमनुभवन्ति । एवमधर्म वैदिकमन्यमपि अनुष्ठातारस्तत्पुत्रा पौत्राश्च यथार्हं तत्फलमनुभवन्त्येव । लोके राजानोऽसर्वज्ञाश्चारद्वारा यदा जानन्ति चौर्यादिक तदैव शिक्षयन्ति चोरादीन् । सर्वज्ञोऽन्तर्यामी सर्वेश्वर कुतो न चिरादेव फल न ददातीति । इदमपि लोकदृष्ट्यैव सङ्गतम् । यथा राजभिस्तत्तदधिकारपदप्रवेशकाल एवैतद्वत्सरपर्यन्तमधिकारपदे नियुक्ता भवन्तो नान्तरैतत्पदाद्भ्रश्यन्तीति प्रतिज्ञाय येऽधिकारपद प्रापिता ते राजशासनस्य नातिविरोधकारिणोऽपि न प्रतिज्ञातवत्सरात्पूर्व राजभिश्शिक्षणीया दृश्यन्ते तथा सर्वेश्वरेण नियतकाल सङ्कल्प्य दत्त सुकृतफलमनुभवितारोऽनुत्कटानि पापान्यनुतिष्ठन्तोऽपि न तदैव पापफलमनुभवन्ति किंतु तत परमेवेति ॥

अपि च केचन पदार्था भक्षिता झडिति पोषयन्ति मानुषान् । प्रतिबद्धशक्तिका केचिद्विलम्बेन । केचिच्च रोगमुत्पादयन्ति । तत्रापि प्रतिबद्धशक्तिका केचिद्विलम्बेन । अप्रतिबद्धशक्तिका सहसैव द्विविधा अपि केचिच्चिराय, अन्ये च केचिच्चिर भक्षितास्तदात्वे परमान्तुष्टिमादधाना अन्तेऽप्रतीकारा रुज निष्पादयन्ति । एव मातापित्रोर्देहदोषा तयोर्दु ख जनयन्त पुत्रादीनप्यभिसङ्क्रामन्ति यदा च मातापित्रोर्देह-

दोषोत्पत्तिकाल एव पुत्रादेरुत्पत्ति । अथ च तौ म्रियेते । तदा मातापितृदेहदोषा पुत्रादिकमभिसङ्क्रामन्त पुत्रादेरेव परा बाधा उत्पादयन्तीति च सार्वलौकिकम् । तद्वदधर्मोऽपि पुत्रादीनामप्यतिशयित दुःख जनयत्येवेति—"समूलो वा एष परिशुष्यति योऽनृतमादधाति" इत्यादिश्रुतिजालमत्रमूलमिति । अतश्च ये सुखमपेक्षन्ते उपेक्षन्ते च दुःखम्, ते प्रवर्तेरन्यथाशक्ति धर्मे निवर्तेरंश्च सर्वथैवाधर्मादिति । अतस्सर्वेश्वराज्ञानुवर्तनात्मक धर्माचरणमेव शरण सर्वेषा पुरुषाणामिति निष्कण्टकोऽय वैदिक पन्था इति ॥

इत्थ वैदिकसद्धर्मप्ररोचनविवेचनम् ।
रङ्गनाथोऽतनोत्तेन प्रीयता श्रीहयानन ॥

आ. रङ्गाचार्यः.

# वेदभाषा

(१य स १००तम पुटात्)

सुविदित खल्विदमेतत्पत्रिकावाचकाना विपश्चिता कश्चन लेख वेद वेदभाषा चाधिकृत्य पूर्वमेतत्पत्रिकायास्तृतयिसाश्चिकाया "वेद-भाषा" इति नाम्ना प्रकटीकृत इति ॥

तत्रह्यशेषविबुधसेव्यो वेदकल्पतरुरनादिरपौरुषेय, अतएवाप्रामाण्यादिशङ्काकलङ्करहित परम प्रमाणमित्यार्यजनाना सर्वेषा समयिना श्रद्धाभूमिरिति वस्तुस्थितिमभिधाय "अत्रैके सङ्गिरन्ते" इत्यादिना प्रबन्धेन वेदानामनादित्वे अपौरुषेयत्वे च केषाचिदाधुनिकानामाक्षेपप्रकारो विशदीकृत । तस्याक्षेपस्य प्रत्यादेशार्थमयमारम्भ ॥

## पुरातनी सस्कृतभाषा

यदुक्त वेदस्य सस्कृतभाषात्मकत्वेन सस्कृतभाषायाश्च प्राकृत-भाषाजन्यत्वेन नूतनत्वादभिनवभाषानिबद्धस्य वेदस्याभिनवतैवोचिता नत्वनादित्वमिति तदेतदविचारसुन्दरम्–तथाहि प्राकृतभाषाया सस्कृत-भाषात पुरातनत्वे न किञ्चिदपि नियामक प्रमाण प्रतीम । न च 'प्राकृता' इति नाम्नैव प्रकृतिसिद्धत्वेन पुरातनतामनुमापयतीति वाच्यम्। प्रकृतिजन्यत्वरूपप्राकृतत्वस्य वक्ष्यमाणदिशा प्राकृतभाषाया सत्त्वेन प्रकृतिसिद्धत्वरूपप्राकृतत्वस्यासिद्धे । नियामकाभावेपि प्राकृतभाषैव पुरातनीति यदि वैयात्यादभिधीयते तदा परोपि सस्कृतभाषैव पुरातनी-त्युक्त्वा कृती भवेदेव । यथा—यदि नियामक किंचिदनभिधायायमा-म्रवृक्ष इति य कोपि ब्रूयात् तदा परोपि ब्रूयादय पनसवृक्षएवेति तस्मादावश्यक नियामकाभिधानमिति परीक्षकैरवश्यमभ्युपेयम् ॥

अथ वक्तव्य अतिचिरन्तना बौद्धा जैना अन्ये कवयश्च स्वस्वसमयग्रन्थान् काव्यादींश्च संस्कृतभाषानादरणेन प्राकृतभाषयैव न्यबध्नन्। तस्मात् संस्कृतभाषात प्राकृतभाषाया पुरातनतेति चेत्, नेद युक्त लोके शब्दाना साधुत्वप्रत्यायक व्याकरणशास्त्रमिति सर्वसम्मतम्। किमपि व्याकरणशास्त्र मृत्पिण्ड घटानिव अपूर्वान् शब्दान् न जनयति किन्तु सिद्धानामेव शब्दाना साधुत्वमवगमयति अयमेवार्थ भगवता पतञ्जलिना स्वप्रणीतमहाभाष्ये पस्पशाह्निके निपुणतर प्रत्यपादीत्येतत् सर्वेषा व्याकरणविदुषा स्पष्टमेव ॥

अपिचानेकेषु प्राचीनप्रबन्धेषु अन्योन्यमत्यन्तविभिन्नान् नानाविधशब्दप्रयोगान् दर्शंदर्श युक्तायुक्तमीमासया सम सम्यगालोच्यालोच्य सम्प्रतिपन्नाना प्रबन्धप्रणेतृणा शब्दाना प्रयोगेषु नानाविधविप्रतिपत्तींश्च समाकलय्य अव्यवस्थापरिहाराय शब्दशास्त्रस्य प्रणयने विद्वद्वराणा प्रवृत्तिरित्येतत् सर्वैस्सुधीभिरभ्युपगतम् ॥

एता रीतिमवष्टभ्य भगवान् पाणिनिरप्येक शब्दशास्त्र अष्टाध्याय्यात्मक व्यतानीत्। इद हि शब्दशास्त्र सिद्धानामेव संस्कृतशब्दाना साधुत्वव्यवस्थापकमित्येतत्सुविदितमशेषविदुषाम् ॥

किंच शब्दशास्त्रप्रणेतार शाकल्यस्फोटायनशाकटायनादयो बहवो विद्वद्वरा पाणिने पूर्वमप्यासन्निति पाणिनिप्रणीतशब्दशास्त्रसूत्रैरवगम्यते ॥

अपिचादिशाब्दिकाना गणनाप्रसङ्गे—

इन्द्रश्चन्द्र काशकृत्स्नापिशली शाकटायन ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिका ॥

इत्यनेनाष्टौ पण्डितप्रकाण्डाश्शब्दशास्त्रप्रणेतार इति च स्पष्टम्।

तथाच प्रकृते महाभाष्यप्रणेता भगवान् पतञ्जलिस्तु क्रिस्तुशका-

त्पूर्वं द्वितीयशतके अभूदिति परीक्षकाणा निर्णय । तत पुरातन कात्यायन । ततोपि भगवान् पाणिनि पुरातन इति विद्वद्वराणा निर्णय ॥

यद्यप्यस्ति महान्विवादो भगवत पाणिनेर्जीवितकालविषये— तथाहि—केचित् पाणिनिराचार्य नन्दसमकालीन इति प्रतिपन्ना । अपरे तु क्रिम्तुशकात्पूर्वमष्टमे शतके पाणिनिरासेत्यास्थिता । अन्ये च बुद्धदेवादपि पुरातन इति सगिरन्ते । इतरे तु व्यासयुधिष्ठिरादिभ्य पश्चात् जनमेजयात्किंचित्पूर्वं पाणिनिरासीदित्यातिष्ठन्ते क्रिस्ताब्दा-त्पूर्वं चतुर्थे शतके पाणिनिर्बभूवेति बहवो मन्यन्ते । एव सतीष्वप्यने-कासु विप्रतिपत्तिषु भगवान् पाणिनि पुरातन इत्यत्र तु न कस्यापि सशय । तथाच पाणिनेरपि प्राचीनाश्शाकटायनप्रमुखाश्शाब्दिका ततो-पीन्द्र[1] पुरातन श्रूयते च शब्दशास्त्रप्रणेतृत्वमिन्द्रस्य । एव च व्याकरणप्रथमप्रबन्धप्रणेतुरिन्द्रस्य कालेपि सस्कृतशब्दास्सिद्धास्सन्तोऽ-वर्तन्तेति ज्ञायते । तेन सस्कृतभाषा अतीव प्राचीनेत्यकामेनापि-स्वीकार्यम् ॥

एव सस्कृतभाषाया पुरातनताया सर्वसप्रतिपन्नाया कथमभि-नवता सस्कृतभाषाया कथ च तद्भाषात्मकस्य वेदस्याभिनवतेति ।

यदप्युक्त "सस्कृता" इति नामैव सस्कृतभाषाया अभिनवता ज्ञापयतीति तदप्यसारम् । यदाहि भारते वर्षे भिन्नभिन्नजातीयाना भूपतीना प्रवेशस्समभूत् तदा तत्तद्राजकीयभाषासंसर्गेणेय गीर्वाणवाणी कालक्रमेण विलक्षणा रीतिमवलम्बत इति शङ्कितस्वान्ता विपश्चित असाधारणया करुणया सस्कृतभाषायामेव व्याकरणलक्षणग्रन्थान् न्यबध्नन् । तस्मादिय गीर्वाणभाषा चिराय सिद्धेष्वेव शब्देषु सस्कार-

[1] तैत्तिरीयसहिता—6 4-7

विशेषज्ञापनात् ' संस्कृता " इति गता परा ख्यातिं, नतु प्राकृतभाषाजन्यत्वेन । तस्मादभिनवताया नेद साधन भवितुमर्हतीति ॥

यच्चोक्त संस्कृतभाषा प्राकृतभाषाजन्येति तदप्ययुक्त, अभियुक्तै कैरप्यनङ्गीकृतत्वात् प्रत्युत प्राकृतभाषाया संस्कृतभाषात उत्पत्तिरित्येषोर्थ प्राकृत व्याकणग्रन्थपरिशीलनवता सुविशद ॥

यदुक्त पुरा प्राकृतभाषया ग्रन्थाना प्राचुर्येण प्रणयनमप्येक निदान प्राकृतभाषाया पुरातनतायामिति तदपि चिन्त्य, अनुभूयते किल स्वाभाविकी प्रवृत्तिर्जनाना स्वस्वसमीहितफलसाधनाय प्रतिकूलनिवर्तनाय च, अपिचाविप्रतिपन्न चैतत्तत्तद्देशाधिपाना भूपाना स्वस्वदेशभाषास्वभिमानो निरर्गळ इति च । ततश्च राजसम्मतभाषया ग्रन्थप्रणयनेन राज्ञा प्रसाद अविलम्बेन भवतीति बुद्ध्या तदानींतना विबुधवरा प्राकृतभाषयैवानेकान् ग्रन्थान् रचयामासु न पुन संस्कृतभाषायास्तदानीमभावेनेत्यस्यैव प्रमाणमिद्धताध्यवसायात् इति ॥

अथसंस्कृतभाषायामनेके भाषाशब्दा निविष्टा तस्मात्कथमियं वाणी शुद्धेत्येतदवशिष्यते । अत्रैते समाधानमाहु — भारते वर्षे बहो कालात्प्राक् संस्कृतभाषाया एवासत्प्रचुर प्रचार । तत कालक्रमेण भिन्नभिन्नदेशीयाना जनाना समावेशेन नदीयोच्चारणदोषेण अथवा अन्येन कारणेन वा बह्व्यो भाषा प्रादुरासन् । तत्र प्राकृतभाषा तु बौद्धाना काले समुन्नतिं समवाप । ततश्च प्राकृतभाषात बह्व्यो भाषास्सञ्जाता तदैव लोकव्यवहारनिर्वाहाय कथञ्चित् संस्कृतभाषायामपि भाषान्तरीयशब्दाना निवेश अनिवार्यतया निर्वृत्त । एतत्प्रमेय पूर्वमीमासाया म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणदर्शनेन विशद भवति ।

---

1 "आसमुद्रद्वयादिषु," इत्यारभ्य समृद्धिभरतवसतिगर्भितैरावतप्रदीप्तादिसंस्कृतशब्दान् प्रकृतीकृत्य प्राकृतशब्दानामुत्पत्ति प्रदर्शिता ॥

जैनास्तु एकस्या एव भगवद्भाषाया सर्वभाषात्मकत्वमुपपद्यते इत्याहु । तदुक्त मञ्जरीमकरन्दे भट्टाकलङ्काचार्येण—"एकस्या एव भगवद्वाण्या नानाभाषात्मकत्व कथमुपपद्यते इति चेत् दिव्यध्वनेरयम चिन्त्यमहिमा स्वभाव यथा च शरत्काले स्वातीस्थे दिवाकरे शुभ्रादभ्रमेघात् प्रभ्रष्टमाभ्र जलमेकमेव ताम्रपर्णीशुक्त्याद्यधिकरणगत सत् मौक्तिककर्पूराद्यनेकाकारपरिणतमखिलधरणीप्रसिद्धमनुभूयते, तथा भगवद्भाषाऽपि स्वोत्पत्तिसमये समुद्रघोषवत् अव्यक्तैकभाषारूपापि तत्तच्छ्रोतृश्रोत्रदेश प्राप्ता सती तत्तद्भाषात्मना परिणमते विचित्रशक्तित्वात्" इत्यादि ॥

अन्ये परीक्षकास्त्वेवमेव सस्कृतभाषाया एकस्या एकानादित्व नित्यत्व चाभ्युपगम्य सस्कृतेतरसर्वभाषाणा सस्कृतभाषाविकारत्व वर्णयन्तस्तस्मिन्विषये "वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्" इति छन्दोगवाक्य प्रमाणयन्ति ॥

### वेदोऽप्यपौरुषेय

तदेव सस्कृतव्याकरणशास्त्रस्य सिद्धानामेव सस्कृतशब्दाना साधुताज्ञापकत्वात् व्याकरणशास्त्रस्य चात्यन्तपुरातनत्वाचतोपि चिरन्तनास्सास्कृतिकशब्दा इत्यवशेनाप्यङ्गीकार्यम्, ततश्च तादृशपुरातनसस्कृतभाषानिबद्धस्य वेदस्याप्यत्यन्तपुरातनत्वान्नाभिनवता युक्ता, किन्त्वनादित्वमेव युक्तमिति । एवमपौरुषेयत्वमपि सूरिभिस्समर्थितम् ॥

अथ वक्तव्य धर्मादेरुपदेष्टारो बुद्धादयस्सर्वज्ञा इत्यभ्युपेयते धर्माधर्मादिसाक्षात्कारवता महात्मना नाज्ञानादिदोषास्सभवन्ति, तस्मात्सर्वज्ञेश्वरकृतादागमाद्धर्माधर्मादिसिद्धिर्भविष्यतीति, नैतन्मनोरम, ईश्वरस्य सार्वज्ञ्ये किञ्चित्प्रमाण यद्युपलभेमहि तदा सर्वज्ञत्वमीश्वरस्य तत्कृताना वाक्याना प्रामाण्य तैश्च धर्मादिसिद्धिरिति कथञ्चित् सभाव्येतापि, नचैव,

नशक्यते च ईश्वरसार्वज्ञ्ये किमपि प्रमाणमस्तीति वक्तु न तावत्प्रत्यक्ष अस्माकमपि सार्वज्ञ्यप्रसङ्गात्, सर्व हि विज्ञाय खलु तदीयज्ञानस्य सर्व-विषयकत्व प्रत्यक्षेण प्रत्येतव्य नचास्माक सार्वज्ञ्यमस्ति। नाप्यनुमान सर्वज्ञान्तराभावेन व्याप्तेरभावात्। अथागम इति वक्तव्यं आगमोपि भवन् पौरुषेयो वाऽपौरुषेयो वेत्यादिना पूर्ववद्विकल्पेनानवस्थानात्, तथाच पौरुषेयत्वे उक्तरीत्या त्वविना प्रमाणमेकस्य सर्वज्ञप्रकल्पन तस्य अवि-लम्भकत्वकल्पन पटुकरणत्वादिकल्पन कस्यचिद्वाक्यस्य तत्प्रणीतत्वक-ल्पन इत्येव दोषाणा बहुत्वेन न पौरुषेयेण वाक्येन धर्म्मादिसिद्धिरिति ॥

अपौरुषेयेण धर्मादिसिद्धिरिति पक्षे तु अपौरुषेयवाक्यमेकमेव कल्पय, धर्मादिनिश्चयस्यावश्यमङ्गीकार्यत्वे बहुदोषपक्षपरित्यागेन अल्प-दोषपक्षाश्रयणमेव ज्याय । एव सर्वसमयिभिरपौरुषेयवाक्यस्यावश्यमङ्गी कार्यत्वाद्वेद अपौरुषेय इति कथमसभावितम् ॥

### इतरोऽप्यपौरुषेय

अत एव बहवस्सैद्धान्तिका अपौरुषेयेण धर्मादिसिद्धिमभ्यु-पेत्य बुद्धर्षभादयस्सर्वेपि तदर्थस्यानुवादका इत्यूचु । अतएव प्राचीनै शौद्धोदनिप्रभृतयस्सप्रदायप्रवर्तका इत्येवोक्तम् ॥

अपि च श्रीयुतमहम्मद्महाशयोपि स्वेनोक्त सर्वमपि महम्मदीय-शास्त्र अपौरुषेयमेवेत्यभाणीत्। एव किल जनश्रुति क्रिस्ताब्दीयषष्ठ-शतकस्यान्तिमभागे श्रीमत अब्दुल्लमहाशयीदमानाया जनिमधिगतस्य महम्मद्महाशयस्य क्रमेण प्राप्तवयस परमैश्वर्यसपन्ना कदीजापि तदीय गुणलोभेन भार्या बभूव। एव सर्वसपत्समृद्धस्य यूनोपि विरक्तिमार्ग एवास्याभिरुचि सजाता। तत कदाचिदस्य महाशयस्य रहसि स्थित्वा चिन्तयत कोप्यपूर्वश्शब्दराशि श्रोत्रपथमाजगाम। ततस्तत्रैव निहित-

मना रात्रिन्दिव कस्याचित् गुहाया वसन् स्वेन श्रुत शब्दराशि स्वीयैरलेखयत् । प्रोवाच च मुक्तकण्ठ स्वसिद्धान्तसार "एक एवेश्वर स एव पूजार्ह वय च तस्य दासा इति । नापि बुद्धिपूर्वोय वचननिचय किंतु य श्रुत स एवोच्चारित" इति । तेन जानीमो महम्मद्महाशयेनाप्य-पौरुषेय वाक्यमङ्गीकृतमिति ॥

### अपौरुषयत्वाक्षेपपरिहार

यच्चोक्त वर्णानामुच्चारणजन्यत्वेनानित्यत्वादनित्यवर्णात्मकवेदस्या-पौरुषेयत्व न युक्तमिति तदपि न साधु । सोय गकार इत्यादिप्रत्यभिज्ञा-बलेन वर्णाना नित्यत्वावधारणात् नित्यवर्णात्मकस्य वेदस्य नित्यत्वे-नापौरुषेयत्वमेव युक्तमिति ॥

अस्तु नाम वर्णाना नित्यत्व तेषु न क्रम स्वतोऽस्ति क्रमा-भावे पदवाक्यभाव कथम् नापि तमन्तरेण प्रामाण्यम् अत क्रम पौरुषेय एवेत्यास्थेय, तथाच वेदस्य पौरुषेयत्व दुर्निवारम् ॥

किच अपौरुषेयस्य वेदस्व सृष्ट्यादो कथमुपलब्धि न तावत्पु-स्तकरूपेण महाप्रळये सर्वस्यापि नष्टत्वात् नपि पुरुषद्वारा तथात्वे पौरुषेयत्वमेवापतति ॥

अत्राहु शाकरा —भगवता बादरायणेन वेदस्य ब्रह्मकर्तृकता-यास्सूत्रितत्वेन ब्रह्मकार्यत्वेपि मनुष्यरचितत्वाभावात् अपौरुषेयत्व युज्यते इति । तदुक्त ऋक्साहिताभाष्ये विद्यारण्यश्रीमच्चरणै —ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्यत्व 'सूत्रित शास्त्रयोनित्वात्' इति ऋग्वेदा-दिशास्त्रकारणत्वाद्ब्रह्म सर्वज्ञमिति सूत्रार्थ । बाढ नैतावता पौरुषेयत्व भवति मनुष्यनिर्मितत्वाभावात्, ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशा-यामाकाशादिवन्नित्यत्व देवताधिकरणे सूत्रितमित्यादि ॥

रामानुजीयास्तु वेदस्य नित्यत्व ऐकरूप्येण सर्वेष्वपि कल्पेषूच्चार्य-

माणत्व स्वतन्त्रोपीश्वर प्रतिकल्प वेदान् नान्यथयति यथापूर्वमकल्पयदि-त्युक्तेरित्याहु । एतत्प्रमेय तत्त्वमुक्ताकलापादिप्रबन्धदर्शिनासुविशद ॥

माध्वास्तु—अपौरुषेयत्व नाम स्वतन्त्रवक्तृपूर्वकत्वाभाव स्वतन्त्रो वक्ता हि सजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुष तत्पूर्वकत्वाभाव एवापौरुषेयत्वम्, अत एवोक्त जयतीर्थश्रीमच्चरणै "नहि वय वेदस्य कूटस्थनित्यता ब्रूम, किंतु शब्दत अर्थतश्च सर्वदैकप्रकारतामेव। ततश्च क्रमस्य कृतकत्वेपि पुरुषाभिप्रायप्रवेशेपि स्वतन्त्रस्य वक्तुरभावाद-पौरुषेयत्वमुपपद्यते इत्यादि ॥

एवच ईश्वर स्वबुद्धिस्थमेववेद सनातनवर्णपदक्रमस्वरादिविशि-ष्टमेव प्रतिकल्पमुपदिशतीत्यनेन पुरुषद्वारा प्रथमोपलब्धिरित्यवसीयते । ईदृशमेवापौरुषेयत्व सर्वाभिमतामिति ॥

अपिचेद सभाव्यते शब्दग्राहकयन्त्रविशेष सहकारिविशेषबलेन प्राक्तनपद्यपदादिक स्वरवर्णध्वन्यादिविषयेषु वक्तृनिर्विशेष यथाव्यञ्जयति एव सर्वशक्तस्सर्वज्ञश्चेश्वर तदीयाचिन्त्याद्भुतशक्त्या अथवा योगबलेन सनातनानुपूर्वीविशिष्टमेव वेद सृष्ट्यादौ व्यञ्जयतीति ॥

सत्स्वप्यनेकेषु सिद्धान्तेषु न कोपि सिद्धान्त लोकोद्वेगकर कर्म कार्यमिति समुपदिशति । अत सिद्धान्ताना परस्पर कथञ्चिद्विरोधेपि द्वैताद्वैतादिविभिन्नमार्गबोधकत्वेनाङ्गीकृतस्यापौरुषेयवेदवाक्यस्येव सिद्धा-न्ताना प्रामाण्य न भज्यते इत्यपि सुवचम् ॥

अतस्सर्वे लौकिका वैदिकाश्च महाशया स्वस्वाचार्योक्ता पद्ध-तिमनुरुध्य विहित कर्म समाचरन्त शमदमादिक सम्पाद्य रागद्वेषादिक दूरीकृत्य परापकृतिदूरीकृतमानसा परोपकारनिरतचित्तास्सन्तो जगदिद सुखसागरे निमज्जयन्त सन्तश्चिरमभिवर्धन्तामिति सप्रश्रयमाशास्महे इति शम् ॥

वि. श्यामाचार्य

श्री

## अथ महीशूराभिवृद्धिर्नाम चम्पूप्रबन्ध

कल्याण न कलयतु तमा सन्तत चिन्तितेऽर्थे
कार्यारम्भ सफलयतु च प्रत्यह वीतविघ्नम् ।
ब्रह्माद्यैरप्यखिलविबुधैरादितस्सेव्यमानो
हेरम्बोऽसौ सकलपुरुषाभीष्टदो देवदेव ॥ १ ॥

शुचितमयदुवशोत्तसमुक्तात्ममूर्ति
क्षपितसकलशिष्टक्ष्मासुराळीहृदार्ति ।
घटितसकलधर्मे भारते ख्यातकीर्ति
जयति जगति कृष्ण॰ स्वाश्रिताशाप्रपूर्ति ॥ २ ॥

महीशूरराज्याभिवृद्धि प्रकृत्य
प्रकृष्ट प्रकल्प्योऽद्य चम्पूप्रबन्ध॰ ।
इति श्रीमहाराजभाव विदित्वा
प्रहर्षप्रकर्षात्प्रवर्ते प्रबन्धे ॥ ३ ॥

न मे वचसि पाटव नच कृतित्वमास्ते कृतौ
नवा सरससाहिती रसिकसौहितीकारिणी ।
तथापि सुगुणाढ्यभूपतिकथानुसङ्कीर्तने
पर कुतुकितैव मा प्रसभमेवमाकर्षति ॥ ४ ॥

### भूमिसमृद्धिः

श्रीमद्दक्षिणभारतान्तरलसन्मद्रास्विभागाश्रित
नानासिंधुशिलोच्चयादिसुषमाजातप्रभावोत्कर ।

चातुर्वर्ण्यनिवासभूजनपदग्रामैः परीणाहवान्
देशो यादवभूपतीद्धमहिमा ख्यातो महीशूरिति ॥ ५ ॥

यत्र ह्यास्तिकरत्नपूर्वपृथिवीपाला इमाः स्वाः प्रजा
रञ्जरञ्जमनेकधाऽर्थसहितं राजेतिनामादधुः ।
विद्वांसोपि विहाय पुण्यनगराद्यावासमप्यञ्जसा
प्राप्ताः पुण्यतमक्षितीशकरुणावादान्यकावर्जिताः ॥ ६ ॥

तत्तद्देशनिवासिभिः कृतिवरैर्देशाटनेदपरैः
स्त्रीपुंसैर्विलुलोकिषात्तकुतुकैस्संमर्दिताभ्यन्तरः ।
श्रीमद्यादवभूमहेन्द्रकरुणादृष्ट्या सदाऽऽप्यायितः
सोऽयं पुष्यति कामपीह सुषमां सर्वात्मना भूतले ॥ ७ ॥

श्रीमच्चामममहीक्षिति क्षितितलं धर्मेण संशासति
प्रष्ठामात्यपदं चिरादधिगतश्शेषाद्रिवर्यो महान् ।
प्राचीनां पदवीं समामनुसरन् नृणां हितं वर्धयन्
प्रत्यग्रामपि रीतिमत्र बहुधा पर्यष्करोदुच्चकैः ॥ ८ ॥

राज्ये निजे प्रकृतयस्सुखमेधमानाः
किंकिं परिष्करणमुत्तरमीक्षितारः ।
कर्तव्यमस्ति किमु संप्रति कीदृशं चे-
त्यालोचनार्थमिह काऽपि सभा व्यतानि ॥ ९ ॥

यत्र च सभायां प्रजानां प्रतिनिधित्वेन समाहूताः स्वकीय-राज्यानुबद्धनानादिगन्तवासिनः परावरविषयविमर्शविचक्षणाः लौकिका-लौकिककार्यविशेषविज्ञानविख्याताः अलोलुपशीलाः, प्रकृतिजनहिता-हितसमालोचनधुरन्धराः, परश्शतं प्रधानसभासदः प्रधानामात्यमहाशय-

स्याध्यक्ष्ये सभाकृत्य निर्वर्तयन्त तादात्विकजनानुकूल्यसपादनेन परा काष्ठामारोपयन्ति राज्यकार्यपरिष्करणविशेषम् ॥

## सस्यसमृद्धि

हेमावत्यापगाया प्रवहति सलिले व्यर्थभाव विमृश्य
प्राज्याना राज्यसीमन्यफलबहुभुवा वन्ध्यता चानुवीक्ष्य ।
कुल्या कृत्वा विशाला बहुपथवितता क्षेत्रपूगान्प्रवेश्य
क्षेम व्रैहेयपुष्ट्या बहुविततमिहाधायि राज्ये जनानाम् ॥ १० ॥

क्रमश प्रहृष्टमनसा महता कपिलासरिच्च रचिता हि तथा ।
इदमीयकृत्रिमसरित्सलिलै प्रचुर फल प्रभवति स्म यथा ॥११॥

विशिष्य चानयोस्सरितोरुपकूलमनुकूल प्रवहन्तीना कुल्यानामुपयोगमनेकधा लम्भिता प्रजा तत्तद्ग्रामाटिकानामुपशल्यदेशे स्नानपानादिव्यापारै निष्कुटनिवापितनिष्पावजालीकूश्माण्डादिवीरुधामाप्यायनै, युग्यानामनडुहा महिषाणा धेनूनामजानामवीना तर्णकाना च स्वच्छन्दतस्सलिलपानसपादनेन केदाराणा च कृष्टाना उप्तबीजानामङ्कुरवता प्ररूढकलमाना वर्धमानाना कलितकणिशाना वा यथोचितसमय यावदम्भ प्लावनैश्च प्रहर्षितास्सकला अपि ॥

गतागतपरायणास्सुखमहर्दिव यात्रिका
चरन्त्विति परिष्कृता बहव एव घण्टापथा ।
तथा गतिनिरोधिकास्वपि नदीषु नाव्यास्विमे
सुसतरणहेतव पथिषु सेतव कल्पिता ॥ १२ ॥

अन्यत्रापि च देवमातृकधरास्वावासमासेदुषा
नीराभाववशेन सस्यकणिशप्राप्तौ विसवादिनाम् ।

तत्रत्यस्य जलाशयस्य विपुलीकारेण विस्तारणात्
पर्याप्त सलिल प्रदाप्य हि नृणा दौर्गत्यमाद्राविततम् ॥ १३ ॥

कोशीधान्यावापमात्रार्हदेशोऽप्यम्भस्सेकाच्छालिनीरन्ध्रभाग ।
अत्रोत्पन्न नव्यमप्यन्नजात तत्रत्यानामाद्यमाभाति चित्रम् ॥

चित्रदुर्गविषयान्तिकदेशे कापि नीरझरकूलसिरकारि ।
यत्र काननमयी वसुधाऽपि प्रापि नित्यपयसोर्वरभावम् ॥ १५ ॥

मारीकण्वाभिहित इह विस्तीर्णकेदारकाढ्ये
दूरेत्यानामहमहमिकासभ्रमेणागतानाम् ।
वित्ताढ्याना हलवृषकुटीकिकरैस्सहताना
कार्षीवल्य कथयतितमा रत्नगर्भत्वमस्या ॥ १६ ॥

इत्थ गच्छति काले प्रादुर्भवति नवेनवे परिष्कारे यथायथ सुखमनुभवति प्रकटितराजभक्तिप्रकर्षे प्रकृतिजनवर्गे आत्रिकमिव पारत्रिकमपि भोगजातमनुभावितुमिव विहाय लोकमिम परिजन च अमरराजपरमातिथिभूते चामराजमहामहीन्द्रे श्रीमन्महाराज्ञीशासनाधीने निखिलेऽपि राजकीयव्यापारे, प्रधानसचिवमहाशयस्य शेषाद्र्यार्यवर्यस्य प्रावीण्येन यथापुरमेव प्रचरति सर्वस्मिन्नपि कृत्यजाते प्रागुक्तरीत्या वसुन्धराया फलेग्रहितासपादनेन सपत्समृद्ध्युन्मेषणेन जनानामदनीयवस्तुप्रवर्धनत सुखजीवनप्रकारे अनपाया उपाया कल्पिता इति राष्ट्रेऽस्मिन्निस्स्वा अपि धनाढ्या , तन्द्रालवोपि कर्मकुशला कारिता सपादितश्च महानय देशस्य सपदभ्युदयप्रकर्ष । एव कियत्यपि सवत्सरगणे समतीते—

अधिगतनिजगात्रप्रौढिमावाप्तभूमा
कलितसकलविद्यस्तत्तदध्यापकेभ्य ।

अमलपटुमनीषो राज्यभार बभार
स्वयमखिलजनेड्य कृष्णभूपाल एष ॥ १७ ॥

प्राचीनाचरिता विधामनुसरन् धर्म्या क्रियामत्यजन्
लोकाना हितकारिणी कुशलता देशे पुनर्वर्धयन् ।
अन्येष्वप्युपवर्तनेषु सलिलाधारप्रणालीजल-
प्रस्तारप्रतियत्नतत्परतया क्षेम भुवोऽस्फावयत् ॥ १८ ॥

तेजस्समृद्धि

इह हि शिवसमुद्रे सह्यजावारिपूर-
प्रपतनजवजाता वैद्युती कापि शक्ति ।
अनितरसुलभाऽऽविर्भाविता बुद्धिशक्त्या-
हितपटुतमाशिल्पिप्रष्ठभूरिप्रयासै ॥ १९ ॥

अस्याश्शक्तेर्महिम्ना प्रचुरविरचिता वैद्युता दीप्रदीपा
भासभास तमिस्रामपि हि दिवसतामेवमापादयन्ति ।
अस्या पुर्या वसन्तस्सकलपुरजना किंच कल्याणपुर्या
ध्वान्त वस्त्वेव नेति ह्यभिदधत इमे तार्किकैस्साम्यमीयु ॥

तथाहि—

अस्या वैद्युतशक्तेस्सर्वत्र तन्त्रीद्वारकसक्रमणविशेषविन्यासवैभवेन अनयोर्नगरयो घण्टापथेषु घट्टेषु प्रतोलीषु वीथिकासु मन्दिरेषु मन्दिराभ्यन्तरेषु अधिकरणस्थानेषु देवायतनेषु सत्रशालासु अग्निशकटशालासु विद्यास्थानेषु मठास्थानेषु किं बहुना, प्रतिगृह प्रत्यङ्गण च प्रस्फुरन्तीभि प्रदीपदीप्तिभि रजन्यामप्यह्नीव निराबाध स्वस्वव्यापारेषु व्याप्रियन्ते सकला अपि लोका । अटिटिषन्त पिपठिषन्त विवत्सन्त

सुषुप्सन्त जिघत्सन्त पिपासन्तो वा न मनागप्यनुभवान्ति प्रदीपकल्पन-जनित प्रयासम् । उपरतो दीपपात्रसमुत्पादनश्रम कर्माराणा, विश्रा-म्यन्ति दीपवर्तिकाविक्रेतार, नास्ति प्रचारलवोऽपि मृत्तैलविक्रयव्यव-हारस्य, नष्टैव क्वचित्प्रतिसायमटाट्यमानाना स्कन्धतलोदूढनिश्रेणिकाना नगरशोधकाधिकारिकिंकरपुरुषाणा प्रतिविशिख प्रतिदीपस्तम्भदेश स्थायस्थाय प्रदीपोद्योतन प्रयत्नकथाऽपि ॥

इति महतीयमुपकृतिराहिताऽनया वैद्युत्या शक्त्या सकललोका-नामिति सर्वमिदमनुभवैकवेद्यमिति न बहु वक्तव्यमिह ॥

इदराज्ये कोलार्नगरनिकटे कापि महती
खनिर्लोके ख्याता सकलजनताविस्मयकरी ।
यदीयात्सरम्भादधिगतमिद भूरि कनकम्
परोलक्ष द्रव्य प्रतिसममुष्याज्यं दिशति ॥ २१ ॥

अधोभागे भूमेरपि च बहुदूराध्वानि खने
जनैर्गत्वा तत्र क्रियत उरु कार्यं प्रतिदिनम् ।
तमश्शान्त्यै तत्र प्रसरति सदा वैद्युतमहो
यथा ते निर्बाध प्रभवितुमल कार्यकरणे ॥ २२ ॥

### जलसमृद्धि

तथा कावेरीत पुरमिदमभिप्लावितमै
प्रणालीमार्गेण प्रचुरपरिक्लृप्तेन सलिलै ।
विशालाया वीथ्यामथ पुरजनावासभवने-
ष्वपि भ्रष्ट कष्ट जलविरहजन्मात्रभवताम् ॥ २३ ॥

न वा कूपान्वेषो भवति न तटाकाभिगमनम्
न वा पौरस्त्रीणा क्लम इह जलोदञ्चनकृत ।

यत स्नानागारे पचनभवने शौचसदने
प्रक्लृप्ता' प्रत्येक जलसरणयो जाग्रति सदा ॥ २४ ॥

घण्टापथेष्वपि च भूरिषु तत्रतत्र
ग्रावोदपानपरिपूरितवारिपानात् ।
युक्ता अनस्सु पशवोपि गवाश्वमुख्या
काले स्वय प्रशमयन्ति पिपासुतार्तिम् ॥ २५ ॥

उद्यानभूमिषु बहुष्वथ किंकरौघा
उत्क्षेपितेन सलिलेन सुदूरभाजा ।
उष्णांशुरश्मिभिरनिग्लपिता दिनान्ते
उच्चावचास्सुमलता अभिषेचयन्ति ॥ २६ ॥

इत्थ विद्याशालिकाबालकाना
आचार्याणा पाठने तत्पराणाम् ।
प्रासादे वा निम्नदेशे सता वा
पान पातु वैशस नास्ति किञ्चित् ॥ २७ ॥

सिष्णासन्त इह प्रभातसमये मध्यंदिने वाऽन्यदा
स्वच्छन्द विनिषद्य मूर्ध्नि नळिकाधारास्रुति युञ्जते ।
साटोप हरमूर्ध्नि सभ्रमपतद्गाङ्ग स्मरन्त पय
सर्वाङ्गेऽप्यभिषिक्तशीतपयसस्सीत्कारमातन्वते ॥ २८ ॥

किंच—विशालासु रथ्यासु राजमार्गेषु च प्रतिकलमटाट्यमानै अनडुद्वाह्यै शकटैरश्वयुक्तै अविरतसमुत्क्षेपितधरणीरजोभिरनोभिश्च तदातदा जन्यमान तलवैषम्य परिजिहीर्षुभि नागरिकपुरुषप्रेष्यजनै कठिनतरग्रावखण्डप्रक्षेपेण घट्टनेन परिदृहणेन च समीकृते भूतले तत्तत्प्रदेशाव-

स्थितनाळिकापरिश्रयणफलकान्युद्धारमुद्धारमन्तरवस्थितान्यम्भासि स्वकरतलकलितपरश्शतपदपरिमाणव्यायतभस्त्राद्वारा समाकृष्य विहायसि प्रसेचयद्भि क्षणेन सर्वेपि देशास्तथासेचितास्सुकुमारा दर्शनीयाश्शिशिरतमास्सचरणयोग्यता भजन्ते । यथा—

चक्रैश्चतुर्भिरतिदक्षिणयन्तृनुन्नै
वेगादिहाध्वनि महाध्वनि ससरन्ति ।
वित्ताढ्यमात्रसुलभानि महान्त्यनासि
रात्रिदिव सुखमटन्ति निरन्तरायम् ॥ २९ ॥

यानसमृद्धि

वाराणस्याद्युपगतिविधौ पुण्यतीर्थावगाहे
देशाद्देशान्तरसमटने सगताना नराणाम् ।
दूरेत्याना त्वरितगमने साधन यद्धि यान
धूमानस्तान्निजजनपदेष्वप्यतीवादिदीपत् ॥ ३० ॥

धूमयानपथचारणरीतिं विद्म सर्वदिशि साधिकनिम्नाम् ।
अत्र राजवरशासनमेव प्रत्यतिष्ठिपदिमामपविघ्नाम् ॥ ३१ ॥

विशिष्य—

नजन्गूड्प्रदेशाज्जनपदमिमक काचिदायाति शाखा
देशादस्मात्प्रयान्ती स्मृतिरियमपरा भाति कल्याणदेशम् ।
अस्या' पुर्याश्च गच्छत्यरसिकरपुर धूमयानस्य काचित्
तस्माच्चान्या प्रयाता शिवमुखनगर यावदाभाति शाखा ॥

कल्याणनगरतोन्या शाखा बौरिंगपेटमायाति ।
अन्या च चित्रदुर्ग कुताश्चिदित्यस्य भूयसी व्याप्ति ॥ ३२ ॥

किंचास्य प्रयोजनांतरमपि निपुणं निरूपणीयम् । यदत्र प्रतिहायनमपि–

महाराजवर्धन्त्यनेहस्यनेके
महानावरात्रोत्सवाहेषु चापि ।
महामात्यमुख्या नियोगिप्रवेका
सुखेनाश्रयन्ते प्रभो राजधानीम् ॥ ३४ ॥

विषयान्तरतोपि च भूरिजना
विलुलोकिषयाऽत्र हि संजिहते ।
इदमर्थमिमे बहवश्शकटा
नियते समये न हि मान्ति निजे ॥ ३५ ॥

यादवाद्र्यादिषु क्षेत्रराजेषु च
प्राज्यभावेन वैदेशिकैस्संगतै ।
प्राप्य धूमानसाऽल्पीयसाऽनेहसा
मानसाभीष्टमप्याप्यतेऽत्राञ्जसा ॥ ३६ ॥

भद्रावत्या निकटभुवि सा विश्रुता लोहशाला
तत्तत्कर्मस्वतिपटुतमैश्शिल्पिभिस्साधनैश्च ।
यस्या लोहं स्वयमिह समुत्पाद्य तैस्तैरुपायै
लोहस्तंभप्रभृतिरिषितश्चीयते कार्यवर्ग ॥ ३७ ॥

तत्र च—

धूमयानपथसंस्करणार्थं सेतुबन्धनदृढीकरणार्थम् ।
यत्रयत्र करणेऽस्त्यभिलाष तत्तदुद्भवति लौहममुष्या' ॥ ३८ ॥

एतादृशैर्बहुभिरत्र सदा प्रवृद्धै'
शिल्पोद्यमैर्नियतकाङ्क्षितवस्तुलाभ ।

नानाविधाभिरिह कर्मकृता जनाना
स्याज्जीवन बहुविध परिकल्पित च ॥ ३९ ॥

कण्णबाडिप्रदेशे कठिनतरगिरिप्रान्तयोरन्तराळे
कावेर्या प्रस्रवन्त्या गुरुतमयतनैस्तिर्यगाबान्धि सेतु ।
मध्येऽत्र प्राक्प्रवाहप्रसरगतिकृते कल्पितैर्द्वार्विशेषै.
स्यन्न वारि प्रहाय स्थिरमिदममुना वारित सागराभम् ॥४०॥

अय तु कृष्णराजसागरोऽतिलोकविश्रुत
समैर्जनैरिदपरैरिहागतैर्विलोक्यते ।
अय हि सेतुरुच्चकैश्शत पदानि मीयते
ततोपि चोन्नत क्रमाद्भविष्यतीति विश्रुति ॥ ४१ ॥

विचित्रमिदमत्र—
आपगाजलभरेण हि पूर्ति सागरस्य जगतीह विस्तृता ।
व्यत्ययोत्र किल सागरपूरात् आपगा बहुजला प्रवहन्ति ॥४२॥

कृष्यादिकर्मसु यथेष्टनियुक्ततोया-
दन्यद्धि सागरमुपैति निरर्थक तत् ।
अत्रत्यसागरजलं तु नदीर्झरात्म
कृष्यादिषु प्रततमारभतेऽर्थवत्ताम् ॥ ४३ ॥

अस्माच्च सेतुबन्धान्निष्पादिता अनल्पा कुल्यास्सुदूरप्रवाहा प्रभूत-परिणाहा पुरुषद्वयसा पयसा प्रौढ प्रवहन्त्य अन्तरान्तरावान्तरविभाजिताभि कुल्याभि क्षुल्लकाभि सर्वानपि केदारान् गाहगाह शालिफलता फलशालिता वा साधयन्त्येतेषाम् । क्वचिच्चोपरितन क्षेत्रमधस्तनं वारिप्रवहणमिति यदि स्यात्तर्ह्यपि घटीयन्त्राद्युपायत उत्क्षिप्तेन

जलेन कृत्य निर्वर्तित भवत्येव । सर्वथा बहवो नदीमातृकना गमिना भुवोऽमुना सेतुना ॥

उद्भावित सपदि वैद्युतदीपतेज
सर्वत्रकल्पितमहानळिकाभिराप ।
शालेयभूमिविततीकरणेन चान्न
तेजोजलान्नसृज ईश्वरताऽस्य युक्ता ॥ ४४ ॥

अधिराजधानि निजदुर्गतटे निबिरीसभूतगृहपङ्क्तिगणा. ।
उपराजसद्मसुषमातिशयप्रतिरोधिन प्रतिदिश गमिता ॥ ४५ ॥

तत्तन्निकेतननिवासिजनस्य वित्त
युक्त प्रदाय निलयोचितभूतल च ।
विस्तीर्णमायतमसकटमन्यदोक
निर्माप्य भूरि नगर विपुल व्यतानीत् ॥ ४६ ॥

स्वीय राजगृहोत्तम निपुणया रीत्या परिष्कारित
पर्यन्तेऽस्य सुगन्धिचित्रकुसुमा वीरुल्लता कारिता. ।
विद्युच्छक्तिजतालवृन्तपवना अन्तर्गृह प्रापिता
वादित्र च मुहुर्नदत्यत इद हार्षीकहर्षास्पदम् ॥ ४७ ॥

अस्या' पुर्या दिशिदिशि नवास्सर्जिता राजवीथ्य
निस्सबाध कृतवसतयो यासु पौरा वसन्ति ।
आस्थानीयव्यवहृतिकृते सन्निवेशा महान्त
पार्थक्येन स्फुटमकृषतानेकशो राजधान्याम् ॥ ४८ ॥

वीथीषु स्पष्टदीर्घास्वधिपुरमभित पार्श्वयोस्तुल्यरूपा
सप्रासादा निवेशा धनिकजनकृताश्चालया एव कल्पद्या ।

ये खर्वा निस्स्ववासा असुभगनिलयास्ते परावर्तनीया
इत्येव राजकीया अधिकृतपुरुषास्सूक्षयन्तेऽत्र शश्वत् ॥४९॥

घण्टापथेषु सरता श्रमवारणाय
छायाद्रुमावळिरिय मुहुरेधमाना ।
शोभा पुरस्य परमामनुवीक्ष्य हर्षात्
स्तब्धा विदेशजनतेव विभाति शश्वत् ॥ ५० ॥

किच, गिरिशिखरनिवासिनीं भगवतीम्—
चामुण्डामभिवन्द्य तच्चरणयोरर्चा विधायादरा-
दात्मान कृतिन समाकलयितु नृणा हि सन्नह्यताम् ।
आरोहादिषु नान्तरीयकतया भावीं गिरौ य श्रम
सोय कल्पितशाकटाध्वचलनाद्रूपेन दूरीकृत ॥ ५१ ॥

अप्राणियोगिभिररश्मिभिरप्यतोत्रै
हस्तद्वयावहितसारथिमात्रगम्यै ।
यानैश्च कैश्चिदिह केचिदनोभिरन्यै
शीघ्र व्रजन्ति शिखर हि सुखेन भक्ता ॥ ५२ ॥

विद्यासमृद्धि

विद्यावाप्ती रोगनिवृत्तिश्च सदाऽपि
प्रार्थ्या सर्वैरित्यभिसन्धाय हि राज्ञा ।
प्रत्यग्रा अप्यन्तरतोऽथ प्रतिरथ्य
विद्याशाला वैद्यकशालाश्च निबद्धा ॥ ५३ ॥

विद्या सर्वजनानामुन्नतिहेतुस्समस्तदेश इति ।
विद्याभ्यासविभाग स्वीये राज्ये नवीन उपक्लृप्त ॥ ५४ ॥

प्रतिदेश च—

ग्रामेग्रामे शिशुजनहिता अर्भका पाठशाला
सन्त्यन्यत्र प्रतिजनपद ता प्रवेशान्तकक्ष्या ।
प्रौढे देशे क्वचिदुपचिता मध्यकक्ष्यान्तशाला
बी ए कक्ष्या विपुलतमतामेति कल्याणपुर्याम् ॥ ५५ ॥

एतद्वस्या नरपतिमणे राजधान्या विशिष्य
प्रातिस्विक्यप्यथ विरचिता शास्त्रकक्ष्या समग्रा ।
य ए कक्ष्या वदति जनता नैकथा या विभक्ता
भाषायामप्यथ गणितके सस्कृते चाथ तत्त्वे ॥ ५६ ॥

इह च समधिका द्विजाद्यास्सुशीला स्वमेधा-
गृहीतार्थतत्वा कलातत्परा ।
प्रतिदिवसमपीह विद्यागुरूणा सकाशे प्रकाशी-
कृताजस्रकप्रश्रया ॥
क्रमसमुपचितातुलात्मीयपाठप्रबन्धप्रयास-
प्रकर्षात्तकक्ष्योत्तरा ।
दधति सकलविन्नकक्ष्यासमासो महाराज-
विश्राणिता योग्यतापत्रिकाम् ॥ ५७ ॥

किचैवमाग्लभाषाप्रचारेऽन्योऽपि कश्चिद्विशेषोऽस्मिन् राज्ये । यत्किल ।
अय हि महाराज —

विद्याभ्यासकृते प्रयस्य बहुधा विन्दन्ति विद्या नरा
प्रौढास्ते किल जागर्ती व्यवहृतिं जानन्ति सम्यक्तमाम् ।
नार्यस्त्वन्तरगारमात्रनिलया किंचिन्न जानन्ति ता
विद्याभ्यासमतोऽकरोत्स्वविषये स्त्रीपुससाधारणम् ॥ ५८ ॥

प्रातिस्विकीरमूषा कारकार बहुत्र निजराज्ये ।
शालाश्चोपाध्याया स्त्रीणा विद्या प्रसारयाचक्रे ॥ ५९ ॥

अथ चासा विद्याभ्यासप्रयोजनविशेष —

बालिकाशालिकासगता योषित
श्रद्धयाऽभ्यासत' पाण्डितीं प्रापिता ।
देशिका कारिता वर्धयन्त्येव ता
स्त्रीकला पर्यवेक्षाकृते चाहिता' ॥ ६० ॥

योषा वा पुरुषा परा कुशलता प्राप्ता धिया सूक्ष्मया
प्रेष्यन्तेऽन्यकलामथो कलयितु द्वीपान्तर सादरम् ।
कालक्षेपकृते धन बहुतर विश्राण्य यत्नेन ते
प्रावीण्य प्रतिपद्य भूय इह चातन्वन्ति साहायकम् ॥ ६१ ॥

एव सस्कृतपाण्डितीमभिलषन् भूमीसुराणा गण
वेदेष्वप्यखिले तदङ्गनिचये सर्वेषु शास्त्रेष्वपि ।
प्रावीण्य प्रतिपद्यतामिति धिया सस्थानपृथ्वीतले
पाठार्थ बहव कलाभिरतुलाश्शाला विशाला कृता ॥६२॥

साहित्यशास्त्रे च नये च वेद्वे वेदान्तभागे च ददाति बुद्धिम् ।
कल्याणपुर्यामथ यादवाद्रौ प्रतिष्ठिता सस्कृतपाठशाला ॥ ६३ ॥

अस्या तु राजधान्या प्रतिष्ठिता प्राग्बहो कालात् ।
पूर्वै राजवरेण्यैस्सस्कृतशाला विराजते प्रथिता ॥ ६४ ॥

ऋग्वेदस्सामवेद श्रुतिरपिच यजु सर्वत प्रातिशाख्य
साहित्य धर्मशास्त्र गणितसहकृत ज्यौतिष शब्दशास्त्रम् ।
प्रत्नो नूत्नश्च तर्क श्रुतिशिखरपराध्यात्मभाष्यत्रय च
प्राङ्मीमासा च तन्त्र ऋतुचरणविधिस्सर्वमध्याप्यतेऽत्र ॥६५॥

गुरवस्तूपत्रिशाश्शास्त्रेषु बहुष्वतीव निष्णाता ।
वेदोच्चारणनिपुणाश्चोपादिशन्त्यत्र भूयसश्शिष्यान् ॥ ६६ ॥

तथाहि—

अणवस्समवायिकारण त्वनुमित्या करण विशिष्टधी ।
मतिरात्मगुणो मनोऽण्विति प्रवदन्ति क्वचिदत्र तार्किका ॥ ६७

कित्त्वान्न स्यादत्र वृद्धे प्रसक्ति
क्षुभ्नाद्भित्वादत्र नेवास्ति णत्वम् ।
न स्तश्चैत्वाभ्यासलोपौ गुणत्वात्
इत्याख्यान्ति ह्यकत पाणिनाया ॥ ६८ ॥

अभ्यासादिह कर्मभेद इह च प्राबल्यमस्या श्रुते
अर्थे पाठत एति च प्रबलता वेद प्रमाण स्वत ।
भाव्य साधनमङ्गजातमुभयी चाकाङक्षते भावना
स्याद्धर्माचरणादपूर्वमिति च क्रोशन्ति मीमासका ॥ ६९ ॥

जीवो ब्रह्म च चेतनौ स्वयमिमौ भिन्नो विरुद्धौ गुणै
वेदान्ता अपि भूरिशोऽभिदधते तत्कर्तृताऽकर्तृते ।
नेद युक्तमहो बहुत्र च तयोरेकत्वसबोधनात्
वेदस्य भ्रमसिद्धभेदपरता वाच्येति वेदान्तिन ॥ ७० ॥

अयमपि धीरोदात्तो नायक एषोपि धीरललितश्च ।
उत्प्रेक्षारूपकयोर्भेद इयानिति वदन्ति काव्यज्ञा ॥ ७१ ॥

दाणी विसेससोहा रण्णा वड्ढइ पुरस्स एदस्स ।
अहाण विअ कुसळ प्राकृतमेव भणन्ति केचिदिह ॥ ७२ ॥

स्मृतिवचन श्रुतिमूल भजति प्रामाण्यमेव सर्वत्र ।
अष्टौ विवाहभेदा धर्म्याश्चत्वार इति च धर्मज्ञा ॥ ७३ ॥

प्रस्तर सान्नाय्य खर म्फ्य वेद मेथी धविम चात्वालम् ।
उपरव कुशा शफ च्छादिरशव इति वैदिका कचिच्छब्दा ॥७४

ऋचो ह्यधीयते कचित्पद क्रम जटा कचित
यजूषि चेतरत्र भूरितैत्तिरीयशाखिन ।
अथान्यतश्च साम गीयते स्वरेण चोच्चकै
अय तु वेदघोषत प्रदेश आश्रमायते ॥ ७५ ॥

प्रकृतसमय एतदीयप्रचारप्रकामात्तकौतू-
हलाविष्टभूपालकाज्ञापिता काचिदालोचनार्था सभा ।
पिपठिषुजनताशरीरादिधृत्यै नितान्त समाहृत्य
मन्त्रे प्रदाप्यान्नमाप्याय्य वासाय धामान्यनकान्यपि ॥

नवनवतमया हि रीत्या परिष्कृत्य पाठान् सहाग्लेयवाचा
सुशिक्षा विधाय स्वक मासिक वेतन चाधिकम् ।
बहुतरसमयात्पुरा समक्लृप्तादुपाध्यायवर्गे तथा
शिष्यलोकेऽभिवर्ध्य स्वय पाठशालामिमामातनोत् ॥ ७६ ॥

एव प्रौढा पण्डिता राजगेहे समान्यन्ते वेतनेनोचितेन ।
आकार्यन्ते चोत्सवाहेऽत्र सर्व औचित्येन प्रापिताश्च प्रशस्तिम् ॥

विशेषतश्च—

क्षोदक्षम भवति यपु च शास्त्रनित्त्वम्
स वर्षगन्गुणन्नि । [illegible] ।

वैदुष्यचिह्नबिरुदोत्तमदानतस्तान्
प्रोत्साहयत्यपि महान्नृपते कटाक्ष ॥ ७८ ॥

अपिच स्वदेशभाषापोषायैष प्रकामहर्षेण ।
कार्णाटकीबुधानप्यभिनन्दयतीह समधिकादरत ॥ ७९ ॥

तथा च—

विद्वासो बहवोऽत्र राजनि महाविद्वास इत्याश्रिता
दैवज्ञाश्च पुरोधसस्सुनिपुणा पौराणिका ऋत्विज ।
अन्येचापि परस्सहस्रमिह ये राजाश्रिता आसते
सर्वे ते नरराजपुगवकृते क्षेम सदाऽऽशासते ॥ ८० ॥

गान्धर्वशास्त्रमपि लुप्तमिद जगत्या-
मत्रोद्दिधीर्षुरभिनन्द्य कुशीलवानाम् ।
गोष्ठी प्रकल्प्य निकटे परिचाय्य नित्य
रासिक्यतस्समुदधारयदेष गीतिम् ॥ ८१ ॥

समधीतिनोऽपि काव्ये गृहीतिनोऽप्यखिलशास्त्रेषु ।
कविताया प्रावीण्य न लभन्ते पण्डिता प्राय ॥ ८२ ॥

आसक्त्या प्रतिहायन च कविताचातुर्यनिर्धारणे
काचित्ससदमारचय्य विबुधैर्निर्माप्य काव्यादिकम् ।
सम्यक्तत्परिशोध्य तत्र च समालोच्योचितामर्हताम्
उत्कृष्टानपि पारितोषिकगणैस्समान्य तोतुष्यते ॥ ८३ ॥

**वैचित्र्यसमृद्धि**

इह च राजधान्या परिष्कारेण परिकल्पिताया प्राणिनिवासन-
शालाया देशान्तराद्द्वीपान्तराच्च सादर समानीय तेषुतेषु स्थानेषु

स्थापितै सिंह व्याघ्र शार्दूल मर्कट भल्लूक क्रमेळक शललि लुलाय वराह गोमायु हरिण प्रायै रनेकै मृगवर्गै मूषक वृश्चिक कृकलास भुजङ्ग डुण्डुभाजगर मुखैर्विषजन्तुविशेषै, शुक पिक काकोलूक वर्तिका प्रमुखै पतत्रिगणै बहुविचित्ररूपभेदै क्वचिदप्यदृष्टचरै कुतश्चिदप्यश्रुतचरै विशेषतोऽविज्ञायमाननामधेयै विस्मयकरैरन्यैश्च प्राणिजातै कैश्चिदन्तरायसपञ्जर बम्भ्रम्यमाणै कैश्चिदायसवल्लीवृतिपरिवृते देशे यथायथ पलायपलाय सचरद्भि कैश्चिदाक्रोशद्भि कैश्चित्सभाकार रटद्भि कैश्चित्प्रेक्षकजन प्रतिभय पश्यद्भि कैश्चित्प्रेक्षकजनाद्बिभ्यद्भि एवप्रायै परिपूरितमिद स्थान दिदृक्षमाणैरनवरतगतागतपरैरनेकैर्जनै-सकुल जनयति विस्मयममित हृदये ॥

एतर्ह्यत्र पटीरदारुजनितस्नेहाभिवृद्धौ पराम्
निस्तुल्यामपि रीतिमत्र बहुधा देशे स्वकेऽपप्रथत ।
हिंदूराज्यधुरधरादिमहितप्रभ्वाद्यवेक्षोचिताम्
वह्नी काननभूमिमेष मृगयाहेतोश्च पर्यष्करोत् ॥ ८४ ॥

आस्तिक्येन च रामसेतुमथुरासाकेतवाराणसी-
काश्मीरादिपवित्रदेशमभितस्तीर्थान्यटन् भूरिश ।
सगृह्णश्च विशिष्टवस्तुनिकर वृद्धोपसेवाफलम्
देवे भक्तिमनुत्तमामुपगतश्चाध्यात्मविद्यामपि ॥ ८५ ॥

वृषाकप्यो स्थानेष्वसकृदभियानोत्सवदिने
कुलस्वामिन्याश्च प्लवरथसमारोहसमये ।
यथा वेदै स्पष्टैर्मुदमयमुपैति प्रभुवर
तथा नान्यैर्गीतैरहह नृपतेरास्तिकमति ॥ ८६ ॥

एव लोकद्वयहितकृते यावदाधायि राज्ञा
देवस्थानद्विजवसतिषु प्राज्यपूजादिक्लृप्ति ।
तावद्वक्तु सुविशदमह नालमस्मीह यस्मात्
तस्मात्प्राज्ञा मयि करुणया प्रीतिपूर्व दयन्ताम् ॥ ८७ ॥

अस्मिन् दोषाश्शब्दतोऽप्यर्थतो वा
प्रादु ष्युस्तान् पण्डिता मर्षयन्तु ।
माहाराजान् सद्गुणौघानमाघान्
श्लाघश्लाघ मानस हर्षयन्तु ॥ ८८ ॥

क वेंकटरामशास्त्री.

## संस्कृतविद्वत्परीक्षावृत्तान्तपत्रिका.

श्रीमन्महीशूरमहाराज श्रीकृष्णराजेन्द्रसार्वभौम समधिष्ठिताया क्रोधनसंवत्सरनवरात्रमहोत्सवानुबन्धिन्या महासभाया आश्वयुजशुक्लत्रयोदश्या भौमवासरे श्रीमन्महाराजसन्निधौ विनिवेदिता संस्कृतविद्वत्परीक्षावृत्तान्तपत्रिका ॥

महाप्रभो ! भवदीयदिव्यशासनानुरोधेन संस्कृतविद्याभिवर्धक महासमितिद्वारा महीशूरनगर्यां संस्कृतमहापाठशालाया यथाक्रमं निर्वर्तिताया विद्वत्परीक्षाया वृत्तान्तं महासन्निधौ विनिवेदयितुमवसरस्समभ्यर्थ्यते ॥

ऐषमः प्रायेण निखिलेष्वपि वेदशास्त्रभागेषु नवीनशासनानुसारेण मध्यमोत्तमपरीक्षा , प्राचीन क्रमानुसारेण प्रथमद्वितीयभागपरीक्षाश्च यथानियमं निरवर्तिषत। तत्र एकविंशत्युत्तरशतं परीक्ष्याः परीक्षायै प्रवेशमभ्यर्थयामासुः। तेष्वेकाशीतिर्विद्यार्थिनः परं पर्यैक्ष्यन्त। अष्टाचत्वारिंशत्संख्याकाश्चोदतारिषु ॥

| | |
|---|---|
| उत्तीर्णेषु च तेषु एकविंशतिर्विद्यार्थिनः श्रीमन्महाराजसंस्कृतमहापाठशालीयाः | २१ |
| षट् विद्यार्थिनः चित्पुरीवेदपाठशालीयाः | ६ |
| पञ्च विद्यार्थिनः श्रीशङ्करमठीयमहापाठशालीयाः | ५ |
| द्वौ विद्यार्थिनौ श्रीव्यासरायमठमहापाठशालीयौ | २ |
| त्रयो विद्यार्थिनः इतरपाठशालीयाः | ३ |
| स्वतन्त्रैर्विद्वद्भिश्शिक्षिताश्चैकादश विद्यार्थिनः | ११ |
| इतिविवेकः | ४८ |

**एवमुत्तीर्णेषु विशेष पारितोषिक पात्रीभूता पुनरत्र निर्दिश्यन्ते**

श्री॥ धर्मप्रवृत्त धर्माधिकारि नवीन रामानुजाचार्यपरिकल्पित पञ्चाशद्रूप्यात्मक वेदपारितोषिक श्री टि के तिरुमलाचार्यस्समविन्दत॥

श्री॥ रिटैर्ड छीफ इजिनीयर राजसभाभूषण कर्पूरश्रीनिवास-रायपरिकल्पित शतरूप्यकपरिमित तर्कशास्त्रपारितोषिक श्रीमन्महाराज-सम्स्कृतमहापाठशालाविद्यार्थी श्री॥ उडुपि हयग्रीवाचार्य प्राप्तान् ॥

विद्वान् पेरेस्वामी तिरुमलाचार्यनामधेयविभूषित षष्टिरूप्यरूप साहित्यपारितोषिक एतच्छालाविद्यार्थी श्री॥ एच रामानुजाचार्यस्सम लभत ॥

श्री॥ कडव पटेल हुच्चुवीरंगौडपरिकल्पित षष्टिरूप्यार्घ सुवर्ण-पदक श्रीशङ्करमठमहापाठशाला विद्यार्थी श्री श्रीनिवासशास्त्री समार्जयत्॥

श्री॥ विद्याविशारद, धर्माधिकरि कुणिगल रामशास्त्रिपरिकल्पित पञ्चाशद्रूप्यात्मक पारितोषिक वरदराजार्योऽविन्दत ॥

अरमने मुसाहेब् रेजिमेण्ट्दार कृष्णरायाभिधानालङ्कृत पञ्चाश-द्रूप्यरूप द्वैतवेदान्तपारितोषिक गोर्नमेंट् शिक्षणमहापाठशालासहायो-पाध्याय श्री॥ के श्रीपादाचार्य समलभत ॥

बेंगळूरु मुजरायि सेक्रिटेरियेट् कदसामिनायकीय रायबहदूरु आर्काटु श्रीनिवासाचार्यनामाङ्कित पञ्चाशद्रूप्यार्घ ग्रैवेयकसमेतमक कनकवीरशृङ्खलपदकम्, तथा गोर्नमेंट्शिक्षकमहापाठशाला सम्कृत प्रधानपण्डितेन महाविदुषा श्री॥ तिरुवळ्ळूरु श्रीनिवासराघवाचार्येण प्रदेय पञ्चाशद्रूप्यात्मक वेदान्तपारितोषिक च श्री॥ महाराज सम्कृत महापाठशालामहोपाध्याय गङ्गाविट्ठ वङ्कटाचार्यस्समार्जयत ॥

अस्मिन्नेव वत्सरे श्रीमन्महाराजानुमति विषयीकृत श्री।। अरमने ऋत्विक् गोमठ श्रीनिवासाचार्येण परिकल्पित पञ्चाशद्रूप्यार्घ पदकोपेत-मेक सुवर्णग्रैवेयक श्री।। चक्रवर्ती तिरुमलाचार्योऽविन्दत ।।

धर्माधिकारि चक्रवर्त्यय्यङ्गार्याभिधान परिकल्पित पञ्चाशद्रूप्य-रूप व्याकरणपारितोषिकमेतत्पाठशालाविद्यार्थी तिळिवळ्ळि शङ्करशास्त्री प्राप्नोत् ।।

धर्माधिकारि पण्डितरत्न कस्तूरिरङ्गाचार्याभिधानालङ्कृत, श्रीमन्म-हाराजसंस्कृतमहापाठशालायां तर्कशास्त्रप्रधानाध्यापकेन महाविदुषा श्री।। आत्मकूरु रङ्गाचार्येण परिकल्पित त्रिंशद्रूप्यात्मक प्राचीनतर्कपारि तोषिक बेंगळूरु श्री।। शङ्करमठमहापाठशाला विद्यार्थी वि एम् रामचन्द्रशास्त्री समपादयत ।।

एवमेकादश सङ्ख्याकानीमानि पारितोषिकाणि यथायोग विनियोजितानि ।।

इत्थं श्रीमन्महाराजकरुणाकटाक्षविशेषेण संस्कृतविद्याभ्यास एकरूपेणाविच्छेदमभिवर्धते ।।



## निरुक्त विद्वत्परीक्षाया मुत्तीर्णानां संभावनाप्रकार..

### १ मध्यमपरीक्षा.

| सङ्ख्या | नामधेयम् | शास्त्रभाग | अध्ययनस्थलम् | समान रूप्याणि | विशेष |
|---|---|---|---|---|---|
| 1 | अग्निहोत्री रामभट्ट | साहित्यम् | मैसूरु महापाठशाला | 50 | |
| 2 | के रामतन्त्री | ,, | ,, | 50 | |
| 3 | ति॥ स॥ कृष्णदेशिकाचार्य | , | मैसूरु स्वव्यासङ्गी | 50 | |
| 4 | नीलातपाळळ वेंकटनरसिंहाचार्य | नवीनन्याय | मैसूर महापाठशाला | 50 | |
| 5 | बि पद्मनाभाचाय | ,, | ,, | 50 | |
| 6 | काशी प्राणेशाचार्य | प्राचीनन्याय | , | 50 | |
| 7 | नटेश घनपाठी (नोचूर) | यजुर्वेद क्रमान्त | नोचूरु | 50 | उत्तमकक्ष्या |
| 8 | जयरामदीक्षित | , | तिरुवण्णामलै | 50 | ,, |
| 9 | नटेश घनपाठी (चिद्बर) | ,, | चिद्बरम् | 50 | ,, |
| 10 | यन् यन् रामस्वामिशर्मा | ,, | चित्तूरु महापाठशाला | 50 | ,, |

| संख्या | नामधेयम् | शास्त्रभाग | अध्ययनस्थलम् | सम्मान रूप्यकाणि | विशेष |
|---|---|---|---|---|---|
| | **२ उत्तमपरीक्षा** | | | | |
| 11 | एच् रामानुजाचार्य | साहित्यम् | मैसूरु महापाठशाला | 100 | |
| 12 | क वे कृष्णमूर्तिशर्मा | व्याकरणम् | ,, | 100 | |
| 13 | तिळवळ्ळि शंकरशास्त्री | ,, | ,, | 100 | |
| 14 | उडुपि हयग्रीवाचार्य | नवीनन्याय | ,, | 100 | |
| 15 | कृष्णघनपाठी | याज्ञिकप्रयोग | ,, | 150 | उत्तम कन्या, राङ्कद युगलम् |
| | **३ विद्वत्पूर्वभागः** | | | | |
| 16 | पलिमारु सीताराम उडुप | व्याकरणम् | मैसूरु महापाठशाला | 50 | |
| 17 | के एस् विश्वनाथशर्मा | ,, | चित्तूरु महापाठशाला | 50 | |
| 18 | श्रीनिवासशास्त्री | अद्वैतवेदान्तम् | शंकरमठ महापाठशाला | 100 | |
| 19 | ति आ नरसिंहाचार्य | विशिष्टाद्वैतवेदान्तम् | मेलुकोटे महापाठशाला | 50 | |
| 20 | दुर्ग भीमाचार्य | द्वैतवेदान्तम् | मन्त्रालय | 100 | |
| 21 | रोट्टि सेतुमाधवाचार्य | ,, | बेंगळूरु व्यासरायमठ | 100 | |
| 22 | एच् शेषय्यगार्य | विशिष्टाद्वैतवेदान्तम् | बेंगळूरु स्वव्यासङ्गी | 50 | |
| 23 | आर् नरसिंहाचार्य | नवीनन्याय | तिरुपति महापाठशाला | 50 | |

## ४ विद्वदुत्तरभाग

| | | | | |
|---|---|---|---|---|
| 24 | वि रामसुब्रह्मण्यशास्त्री | व्याकरणम् | चित्तूरु महापाठशाला | 100 |
| 25 | आर् एल् अनन्तरामशास्त्री | ,, | ,, | 100 |
| 26 | के शंकरनारायणशास्त्री | नवीनन्याय | शंकरमठ महापाठशाला | 100 |
| 27 | मद्गेरे कृष्णशास्त्री | ज्यौतिषम् | मैसूरु महापाठशाला | 100 |
| 28 | शृंगेरि शंकरनारायणजोयिस | ,, | ,, | 100 |
| 29 | यस् सुब्रह्मण्यशर्मा | ,, | ,, | 100 |
| 30 | जे यन् कृष्णय्यगार्य | ,, | ,, | 100 |
| 31 | रा आ कृष्णमाचार्य | धर्मशास्त्रम् | मैसूरु स्वव्यासङ्गी | 100 |
| 32 | ए आर् वेंकटरामशास्त्री | अद्वैतवेदान्तम् | चित्तूर महापाठशाला | 100 |
| 33 | चक्रवर्ती तिरुमलाचार्य | विशिष्टाद्वैतवेदान्तम् | मैसूरु महापाठशाला | 100 |
| 34 | सकीवट्ट वेंकटाचार्य | ,, | मैसूरु स्वव्यासङ्गी | 75 |
| 35 | के वेंकटेशाचार्य | द्वैतवेदान्तम् | ,, | 50 |
| 36 | मध्वरायाचार्य | ,, | मैसूरु महापाठशाला | 100 |
| 37 | के रामचन्द्राचार्य | धर्मशास्त्रम् | बेंगळूर स्वव्यासङ्गी | 50 |
| 38 | टि ईश्वरशास्त्री | पूर्वमीमांसा | शंकरमठ महापाठशाला | 50 |
| 39 | सुब्बर गोपालकृष्णाचार्य | द्वैतवेदान्तम् | तिरुपति महापाठशाला | 50 |

| संख्या | नामधेयम् | शास्त्रभाग | अध्ययनस्थलम् | सम्मान रूप्याणि | विशेष |
|---|---|---|---|---|---|
| 40 | वेंकटरमणाचार्य. | ,, | उडुप स्वव्यासङ्गी | 50 | |
| 41 | पि के रामदासोपाध्याय | ,, | उडुपि महापाठशाला | 50 | |

## ५ विद्वत्परीक्षा पूर्वोत्तरभागौ.

| संख्या | नामधेयम् | शास्त्रभाग | अध्ययनस्थलम् | सम्मान रूप्याणि | विशेष |
|---|---|---|---|---|---|
| 42 | टि के तिरुमलाचार्य. | यजुर्वेद सलक्षण घनान्त | मैसूरु महापाठशाला | 100 | |
| 43 | के एस् अनन्तनारायणशास्त्री | व्याकरणम् | चित्तूरु महापाठशाला | 150 | |
| 44 | यन् रगरामानुजाचार्य | ,, | तिरुपति महापाठशाला | 150 | |
| 45 | ए रगसामय्यगार्य | नवीनन्याय | नागमगल पाठशाला | 150 | |
| 46 | टि सुब्बाशास्त्री | पूर्वमीमांसा | शकरमठ महापाठशाला | 200 | उत्तम |
| 47 | सुब्बाशास्त्री, विश्वरूपम् | अद्वैतवेदान्तम | ,, | 150 | कक्ष्या, |
| 48 | वरदराजार्य | ,, | पडमार्नेरि स्वव्यासङ्गी | 150 | शङ्कर |
| 49 | यन् सीताराम उडुप | द्वैतवेदान्तम् | उडुपि स्वव्यासङ्गी | 150 | युगलम् |
| 50 | मधुरे श्रीनिवासाचार्य | ,, | बेंगळूरु व्यासरायमठ | 150 | |
| 51 | के श्रीपादाचार्य | ,, | मैसूरु स्वव्यासङ्गी | 150 | |
| 52 | वि यस् रामचद्रशास्त्री | प्राचीनन्याय | शकरमठ महापाठशाला | 150 | |

॥ श्री ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

# विषयसूचना

## विज्ञप्ति.

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम—संस्कृतविद्याभिमानिन पुरुषप्रवरा य कंचन विषयमधिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकर्मित कर्णाप्यनुद्वेगकर अचर्चितपूर्व कालदेशदशानुगुण प्रपञ्चोपकारकर धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकर प्रस्पष्टमुखं-विलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त, तेभ्यो महद्भ्य समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्या तमुपन्यास पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृश संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

सपादकस्य

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक आग्रिम मूल्य सार्धकरूप्यक प्रापणव्ययपृथक्कृतम (भारतमण्डले)
२ विद्यार्थिना पुन एकरूप्यकम्
३ विभिन्नदेशे सपादरूप्यद्वयम (3 s) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्ष, मैसूरु

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा

— —

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"

( ईशोपनिषत् )


सपुट-२] एप्रिल् १९२६ [सञ्चिका-२


## वेदतत्त्वम्.

वेदानुद्धरते जगन्निवहते भूभारमाबिभ्रते
 क्रूर दारयते बलिं छलयते दुष्टक्षय कुर्वते ।
पौरस्त्य जयते हल कलयते कारुण्यमातन्वते
 हिंस्रान् खण्डयते दशाकृतिकृते कृष्णाय सन्मङ्गळम् ॥

अथ को वद —अभिप्रायविशेषो वेद

वेदपदाभिधेय ज्ञानम्, विद ज्ञाने इति हि धातुविदस्समामनन्ति । स च हृदय अभिप्राय अभिसंधिरित्यादिशब्दैर्व्यपादिश्यते । तादृशाभिप्रायविषयीभूतोऽर्थ तदभिलापकश्शब्दश्च वेदशब्देन व्यपदिश्येते, यतोऽर्थं विज्ञानेन विषयीकृत्य व्यवहरन्ति विवेकिन , वेदवित् शास्त्रविदित्यादौ वेदार्थेऽपि वेदपदव्यवहार ॥

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
तत्र शब्दार्थविज्ञानैरित्यैक्यमपि सूत्रितम्[1] ॥

इति ।

### ऋषय

इत्थमत्र बह्वृचा अधीयते—

यज्ञेन वाच पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधु पुरुत्रा ता सप्तरेभा अभिसनवन्ति[2] ॥

अयमस्यार्थ —यज्ञेन प्राचीनसुकृतविशेषेण, वाच पदवीय वाचो मार्गं तत्प्रकाशनसामर्थ्यमायन् महान्त । ऋषिषु प्रविष्टा तामितरे मनुष्या अन्वविन्दन् । इतरे अध्यापका तामाभृत्या आहृत्याधीत्य पुरुत्रा बहुषु प्रदेशेषु व्यदधु विस्तरयामासु । ता सप्त रेभा शब्दायमाना पक्षिण इव सन्त छन्दासि अभिसनवन्ति सगच्छन्ते । इति ॥

श्रुतिरियमित्थमुपबृह्यते पुराणेषु—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षय ।
लेभिरे तपसा पूर्वमनुज्ञातास्स्वयम्भुवा ॥ इति ।

एतेन ऋषीणा हृदय वेद इत्यभिव्यञ्जितम् ॥

### अवतार

एव खलु सर्वेश्वरस्य जगदनुग्रहलक्षण व्यापारमवताररहस्यविदस्स्मरान्ति—

न ह्याप्तवादा नभसो निपतन्ति महासुरा[3] ।
नैव वा निस्सरन्त्यस्य कुड्यादिभ्योऽपि देशना ॥

---

[1] योगसू 1-4० [2] ऋग्स 10-71-3 [3] विष्णुपु 3-18.

अदृश्यैर्विप्रलम्भार्थं किमु कैश्चिद्दुरात्मभि ।
यद्वा पिशाचादिभिस्स्युरीरितास्तादृशा गिर ॥
एवमाद्युच्यमान तु श्रद्धधानस्य शोभते ।[1]

देहेन्द्रियादिसघातो भवेद्विखरशब्दित ।
वैखरी स्यात्तत्र भवा व्यवहारोपयोगिनी ॥

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
य हि रक्षितुमिच्छन्ति बुद्ध्या सयोजयन्ति तम् ॥
यस्मै देवा प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपनीतो विनश्यति ॥

यदायदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मान सृजाम्यहम् ॥
पूर्वोत्पन्नेषु भूतेषु नृदेवादिषु चाप्यहम् ।
अनुप्रविश्य धर्मस्य करोमि परिपालनम् ॥
यद्वै धर्मोपकाराय यच्च दुष्टनिबर्हणम् ।
चरित मानुषादीना सर्वं जानीष्व मत्कृतम् ॥
प्रविश्य च तथा पूर्वां तनु धर्मभृता वर ।
जगतोऽस्य जगत्यस्मिन् करोमि परिपालनम् ॥

एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा ।
जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा ॥
स एवमुक्तो विमुखश्चिन्ताव्याकुलमानस ।
प्रणम्य वरद देवमुवाच हरिमीश्वरम् ॥

[1] श्लोकवा 87

का शक्तिर्मम देवेश प्रजास्स्रष्टु नमोऽस्तु ते ।
अप्रज्ञावानह देव विधत्स्व यदनन्तरम् ॥
चिन्तयामास विश्वेशो बुद्धिं बुद्धिमता वर ।
स्वरूपिणी ततो बुद्धिः उपतस्थे हरि प्रभुम् ॥
योगेन चैना सयोज्य स स्वय युयुजे तदा ।
स तामैश्वर्ययोगस्था बुद्धिं शक्तिमतीं सतीम् ॥
उवाच वचन देव बुद्धि वै प्रभुरव्यय ।
ब्रह्माण प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ॥
तदर्थमीश्वरादिष्टा बुद्धि क्षिप्र विवेश सा ॥
बाढमित्येव जग्राह यथाऽऽज्ञा शिरसा हरे [1] ॥ अनेन भगवदनुप्रविष्टया तदाहितशक्त्या बुद्ध्याऽनुप्रविष्टत्वात् सृष्टिसामर्थ्यं ब्रह्मण उक्तम् । अनेन वेदप्रदान वेदापहार पुन प्रदानादिक व्याख्यातम् । एवमवताररहस्येन महता हृदयमेव भगवद्धृदयमित्युपदिष्ट भवति ॥

## मीमासासम्मति

मनुरप्यत्रैवमस्मार्षीत्—

विद्वद्भिस्सेवितस्सद्भिर्नित्यमद्वेषरागिभि ।
हृदयेनाभ्यनुज्ञातस्त वै धर्मं निबोधत[2] ॥

इति । अत्र मेधातिथिभाष्यम्—अथवा-हृदय वेद स ह्यधीतो भावनारूपेण हृदयस्थितो हृदयमिति ॥

एव व्याख्यानस्य मूल कौमारिल तन्त्रवार्तिकमिदम्—

एतेन वैदिकानन्तधर्मधीसस्कृतात्मनाम् ।
आत्मतुष्टे प्रमाणत्व प्रसिद्ध धर्मशुद्धये ॥

[1] श्रुतप्रका 476 पृ [2] मनु 2-1

तथैव बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां नोन्मार्गेण प्रतिभानं संभवतीति वैदिकवासनाजनितत्वात् वेद एव स भवति, तथाहि—

यथा रुमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरुक्मभूमौ ।
यज्जायते तन्मयमेव तत्स्यात् तथा भवेद्वेदविदात्मतुष्टिः ॥

एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः[1] ॥

इति ॥

### न्यायसम्मतिः

एतदभिप्रेत्यैव न्यायकुसुमाञ्जलावुदयनाचार्यः "जन्मसंस्कार"[2] इति कारिकाव्याख्यानावसरे प्राह 'उत्पत्तितोऽभिव्यक्तितोऽभिप्रायतो वाऽनवच्छिन्नवर्णमात्रस्य निरर्थकत्वात्" इति । पौरुषेयत्वविचारः प्रस्तुतः । उत्पत्तित इति नैयायिकमतमुक्तम् । अभिव्यक्तित इति मीमांसकमतमुक्तम् । अभिप्रायत इत्यौपनिषदं मतमुक्तमिति विवेकः ॥

### वेदान्तसम्मतिः

एतत्सर्वमभिप्रेत्य वेदान्ताचार्यैस्सर्वार्थसिद्धावित्थमभिहितम् । यथा प्रतिकल्पमेकरूपामिसंधिरीश्वरः एकरूपमेवाज्ञावाक्यं वदति । एतदेव वेदस्य नित्यत्वं, यदैकरूप्येण सर्वेषु कल्पेषूच्चार्यमाणत्वम् । ईश्वराभिसंधिविशेषद्योतकत्वादाज्ञारूपत्वमपि । नन्वीश्वरस्स्वतन्त्रत्वात् वेदान् प्रतिकल्पमन्यथयतु । नान्यथयतीत्यवगम्यते । अन्यथाकरणे प्रमाणाभावात्, यथापूर्वकल्पेन प्रमाणसंभवाच्च इति[3] । अपरथा अव्यवस्थितचित्तताप्रसङ्गश्च । किमीश्वरस्य तत्र शक्तिर्नास्ति, यद्वातद्वा करणमेव

---

[1] तन्त्रवा 132 पु  [2] 2-3 श्लो  [3] सर्वा 565 पु

किं शक्ते प्रयोजनम्? तस्माद्व्यवस्थिताचित्ता पुरुषा एकरूपेणैवा-वस्थिता इति भूषणमेवैतत् । तदुक्तं मत्स्येन—

अस्य धर्मस्य सर्वज्ञ कल्पादौ परमेश्वर ।
व्यञ्जक केवल विप्रा नैव कर्ता न सशय ॥
ब्रह्मणा चोदितो विष्णुर्व्यासरूपी द्विजोत्तमा ।
हिताय सर्वजगता वेदभेदान् करोति स [1] ॥

इति ॥

वैलक्षण्यम्

एव च महता चित्तमैश्वर चित्तमेव तत् ।
स एव वेद इति च निर्णीत निरुपद्रवम् ॥

एतेन परमेश्वरमारभ्य बहुमहाजनसम्मतोऽयमभिप्राय इति अयमेव हि महाजनपरिग्रह इतरेभ्यस्सकलेभ्योऽप्यागमेभ्य वेदस्याति-शय । एतादृशातिशयश्चागमान्तरेषु नास्तीत्यभिप्रेत्य भट्टकुमारिल प्राह—

एकस्य प्रतिभान तु कृतकान्न विशिष्यते ।
अतश्च सम्प्रदायेऽस्मिन्नैक पुरुष इष्यते ॥[2]
सर्वदा चापि पुरुषा प्रायेणानृतवादिन ।
यथाऽद्यत्वे न विस्रम्भ तथाऽतीतार्थकीर्तने ॥[3]
न च पुवचन सर्वं सत्यत्वेनावगम्यते ।
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी[4] ॥

इत्यादि ॥ अत एव प्रायश्चित्तशब्दोऽपि बहूना महाजनाना परिष-त्प्रविष्टानामेकरूप हृदय सम्मत्यपरपर्याय प्राहेति माधवाचार्य पराशर-स्मृतिव्याख्याने त्विदमङ्गिरोवचनमुदाजहार । यथा—

[1] पराशरमा 1-21 [2] श्लोक 90 पु [3] श्लोक 88 पु [4] तन्त्रवा 178 पु

प्रायशश्च समं चित्तं चारयित्वा प्रदीयते ।
पर्षदा कार्यते यत्तत्प्रायश्चित्तमिति स्मृतम् ॥

इति । अत्र महाजनपरिग्रहविषये वक्तव्यं बह्वस्ति तत्तु समयान्तरे प्रपञ्चयिष्यामः ॥

एतादृशानां महतां स्मृतिः शीलं च वेदमूलकत्वाद्वेद इत्येव व्यवह्रियते । एतादृशेन महनीयेन हृदयेनानुष्ठीयमानः शीललक्षणस्सदाचारः परंपरया समागतः सत्संप्रदाय इति सिद्धान्तः ॥

## अभिप्रायसूचनम्

लोके खलु कंचनाभिप्रायं कस्मैचिदभिव्यञ्जयितुं बहवस्साधनविशेषास्समुपादीयमाना उपलभ्यन्ते। तत्र वर्णसमुदायात्मकवाक्यलक्षणा एव प्रायो मनुजानाम्, क्वचिद्वर्णाभिव्यञ्जकलिपिलक्षणा उपायाश्शिक्षितानाम् । मुखप्रसादाक्षिनिकोचभुजविक्षेपादिलक्षणेङ्गितरूपा क्वचित् । तथाऽनुप्रवेशानुग्रहलक्षणा महताम् । केवलध्वन्यादिलक्षणास्तिरश्चामित्यादयोऽनन्ताः सर्वेषां प्रत्यक्षसिद्धाः । तत्र केचनोपायास्सहजाः स्वाभाविका इत्युच्यन्ते । केचन सामयिका औपाधिका इत्यत्र नास्ति कश्चिदपि विवादः ॥

शिष्टमग्रे भविष्यति ॥

श्रीरस्तु

## शाकुन्तलनाटकविमर्शः

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥

### उपोद्घातः

ऐतिहासिक कल्पित मिश्रभेदेन प्रायस्त्रिविधा काव्याधारकथा । तत्र इति ह आसेति व्युत्पत्तिलभ्य प्राक्तनमहापुरुषचरित्रनिरूपणैकपरं महाभारतरामायणादिकथा ऐतिहासिकशब्देन व्यवह्रियन्ते । इयमेव कथा स्वाभाविकी वास्तविकी चेति । कल्पितकथाश्च कविधुरीणबुद्धिवैचित्र्यसंग्रथिता, नेमा वास्तविक्य, तासां च यत्किंचिदुद्देशेनैव संग्रथनात् । मिश्रकथाश्च उभयात्मिका, तासां च यथोद्देशं सदर्भकल्पनात् वास्तविकार्थसद्भावाच्च । तत्र च रघुवंश कुमारसंभव किरातार्जुनीयादिकथा ऐतिहासिक्य । कादम्बरी दशकुमारचरित मेघदूतादिकथा काल्पिता । शाकुन्तलोत्तररामचरितोन्मत्तराघवादिप्रतिपादिता कथा मिश्रा इति विवेक ॥

प्रायशो जगत्यां प्रयत्नानां यथा यत्किंचित्प्रयोजनोद्देशानुसारित्वं तथा काव्यादीन्यपि किमप्युद्देश्यमनुसरन्तीति सार्वजनीनमेतत् । काव्येषु हि संतोषसंपादनं, वस्तुस्थितिनिरूपणं, कृत्याकृत्यविवेचनं धर्माधर्मनिरूपणोत्तरोत्तरश्रेयोभिवृद्धिप्रतिपादनं प्रभृतयोऽनेके प्रयोजनोद्देशा वर्तन्त एव । चित्रलेखने भित्तिसमाश्रयणवत् जनानां सुखदु खनिमित्तकप्रवृत्तिनिवृत्ती, तद्बोधिका वाग्रूपा क्रियाश्च रूप-

यितु, सुख मे भूयात् इत्येवविधासु सकलजनसाधारणीषु प्रवृत्तिषु सतीषु यथा हि तादृशी प्रवृत्तिर्न स्वेतरदु खनिमित्त प्रभवेत् तथाभूतानुपायान्बोधयितु, असत्प्रवृत्तौ जुगुप्सा सत्प्रवृत्तौ समीहामापादयितु लौकिककार्यकारणानुमानक्रमान् शिक्षयितु, अतीन्द्रियानप्यर्थानैन्द्रियिकान्विधातु च प्रवर्तन्ते महाकवय । अयमेवाभिप्रायस्स्पष्टमवगम्यते मम्मटनिबन्धनेषु बहुश ।

पूर्वोक्ता उद्देश्या एकस्यामेव सिद्धकथाया सिद्ध्यन्ति न वा सिध्यन्ति, कविभिर्विमर्शनीया तु कथा तादृशमुद्देश्य व्यञ्जयन्त्येव भूयसा । कथाभित्तिमनाश्रित्य न हि वर्णयितु चित्र वा विलेखितु शक्यम् । कवयश्च सम्यक्स्वोद्देश्यप्रकटने इतिहासादिभ्य स्वारसिकी स्वोचितामेव कथा सगृह्णन्ति, यतस्तादृशीषु कथासु जना रज्येयु, विश्वसेयुश्च । श्रीरामकृष्णादिमहापुरुषचरित्रेषु जनाना स्वाभाविकानुरागविश्वासादिसद्भावात् तत्कथा एव सत्प्रवृत्तिमुत्पादयन्तीत्यत्र नैव सशयलेश । अपिच, इतिहासादिप्रतिपाद्यश्रीरामादिमहापुरुषचरितेषु विचार्यमाणेषु तत्तत्कालानुभाव्यसुखदु खादिक च स्वयमेव समुत्पद्यते नैतादृशी सुकरता अन्येषु कथासदर्भेषु अत इय श्लाघापदमुत्तमकाव्यरूपेण परिणमते भरतखण्डे । एवमेव भाषास्वन्यासु ग्रीक्, ल्याटिन्, जर्मन् इग्लीष् इत्याद्यासु सुप्रसिद्धासु ऐतिहासिकमहापुरुषचरितमवलम्बन्ते तत्तद्भाषामय्य कथा । ये चैतिहासिककथामवलम्ब्य ग्रन्थरचने प्रवर्तन्ते महाकवय, ते तु यदि तामेव कथासरणिमवष्टभ्य वर्णयितु प्रवृत्ता तदानी स्वोचिता उद्धारा अभिप्राया नैव व्यञ्जितास्स्यु । पर तु यदि तामेव कथा मिश्रितामुपयुञ्जते तदानीमेव कथाग्रथनकौशल प्रेक्षावतामुपयुक्त हृदयङ्गम च भवति । यद्येव मिश्रिता कथा स्यात् तदैतिहासिककथाया

न्यूनतेति न शङ्क्यम् । तावताऽन्यूनताया अनपायात्, अविश्वासादर्शनाच्च कल्पितकथात काव्योद्देश्यानामत्रैव सुकरतया अनुभूयमानत्वाच्च ।

तथाहि—तत्र तावत् नाटकरत्नतया जेगीयमान शाकुन्तलनाटक परिगृह्य पश्याम —एतन्नाटकीयकथामूलभूत महाभरत शकुन्तलोपाख्यानापेक्षया नाटकीयकथायाश्च महान् भेदो वर्तते । तत्र हि भारती कथैवविधा श्रूयते—दुष्यन्तमहाराज कदाचिदाखेटार्थं वन गतो मध्येमार्गं दृश्यमान कण्वाश्रम प्रविश्य महर्षे कण्वस्य पर्णशालायामवलोक्य शकुन्तला, विस्मितस्तदीयसौन्दर्यदर्शनेन परीक्ष्य चान्त करणवृत्तिं गान्धर्वविधिना तामुपयेमे । मृगयार्थमिदानीमागत कतिपयदिवसैरेव त्वामानयिष्यामीति प्रतिज्ञाय निजनगरीं प्रतस्थे च । ततश्च कतिपयवत्सरेभ्योऽनन्तर शकुन्तलाऽपि प्राप्तवयस्केन स्वकुमारेण साक महर्षेराज्ञया सहायभूतैर्मुनिकुमारकैरुपेत्य राजास्थानीमवलोक्य राजान प्रत्येवमवादीत्—भो ! महाराज, भवत एवाय कुमार कण्वाश्रमे जात अङ्गीकुरुष्व भवदीय औरस कुमारमिमामिति, ततो राजनि च कामिन्या महाराजाधिराज प्राप्तुकामाया उपायोऽय नान्यथेति तद्वचन तिरस्कुर्वति शकुन्तलाऽपि तद्वचनमाकर्ण्य महता कोपेन विष्फुलिङ्गायमानकम्पयमानाधरा दम्पत्योस्स्वरूप तयोस्सबन्ध तयोरनुराग धर्माधर्मौ, सत्यासत्ये च सम्यग्विविच्य, भवानेव सत्यात्मा धर्माधर्मप्रवर्तक सदाचारशील इति प्रथा दाम्भिकीमवलम्बते । यदि पूर्वतन भवद्वचन मृषैव भवेत्तदा भवच्छिरस्सहस्रधा प्रस्फुटेदिति यदा शप्तुमुपचक्रमे तदा काचन दैवी वागवातरत्, "अय भवत एव कुमार स्वीक्रियताम्" इति । इमा वाणी शृण्वन् दुष्यन्त — "अये शकुन्तले ! जनापवादभीत्या त्वामहमेवमवादिष, नान्यथा भव-

त्यामविश्वासादिक मम वर्तत इति भवत्या विभावनीयम्" इति समाधाय ता परिजगृहे इति।

शाकुन्तलनाटके तु—दुर्वास शाप, अङ्गुलीयकप्रदान, शक्रतीर्थे तत्पनन, मेनकाकृत शकुन्तलापहरण अङ्गुलीयकावलोकनमात्रेण राज्ञश्शकुन्तलास्मृति, इन्द्रलोकगमन तत आगमनसमये मारीचाश्रमे पुत्रदर्शनपूर्वक शकुन्तलासमागम इत्यादि सद्भ कविकल्पित इत्यनयोर्महान्भेद। अयमेव महाकवेस्सामर्थ्यं उद्देश्य च सम्यग्व्यनक्ति।

तथाहि—अस्मिश्च नाटके धर्म लोकव्यवहृतिश्च स्पष्टीक्रियते। परन्त्वन्यदपि मानवानुभूयमानसुखनिदानभूतानुरागप्रपञ्चीकरणेऽपि कवेर्महानुद्देश इति प्रतिभाति। तत्र प्रथम रसप्रकटनोद्देशेन कथाया यत्किञ्चिद्विपर्ययेण कविकृता चमत्कृतिं यथामति विचारयाम।

नाटके हि शृङ्गाररस प्रधान, यदि च महाकवि भारतीं कथा तेनैव रूपेण नाटके सकलयेत, तदा नैव तेन शृङ्गाररसस्य प्राधान्य व्यज्येत्, करुणरस एव मुख्यस्स्यात्, सोपि न तथा विस्तृतो भवेत्। आकस्मिकशकुन्तलादर्शनेनाङ्कुरितोपि शृङ्गाररस क्रमेण द्विदलीभूय लतारूपेण फलोन्मुखो यथा भवेत् तथा स्पष्टयितु न मूलमुपलभ्यते तस्या कथायाम्। ततस्सपुत्रशकुन्तलादर्शनसमये तत्तिरस्करणसमये तयोस्तादात्विकवाग्विचारे स करुण एव रस प्रतीयेत, न शृङ्गाररस। अपि च शकुन्तलाया दु खावस्थादर्शनेन प्रेक्षकाणामपि दु खाविर्भाव कोपावस्थाया च कोप प्रभवति। सख्या अपि शकुन्तलाया महती दुर्दशेयमापत्तितेति दु खमप्युद्भूयात्। अन्ततो गत्वाऽपि आकाशवाणीसमनन्तरमपि करुणरस एव स्पष्ट प्रतीयते न तु शृङ्गाररस। अत. भारतकथायामाद्यन्तभागेषु

शृङ्गाराभिव्यक्तावपि न प्रधान स रस । किंतु करुण एव। तस्मात् महाकवि कालिदास स्वीयनाटके भारतकथातोऽन्यानप्यभिप्रायान्सङ्क-लय्य तद्द्वारा शृङ्गार प्रवर्धमानो यथा सर्वत्र व्याप्नुयात् तथा विततानेति।

यथा—प्रविशति दुष्यन्तमहाराजे कण्वाश्रम तत्समये अन-सूयाप्रियवदाभ्या साक शकुन्तलया क्रियमाण वृक्षाणा जलसेचनरूप कंचनसदर्भ प्राथमिकमकल्पयत् । ततश्च तासा परस्पर स्वैरालापवि-हारादीन् दिदृक्षोस्ताभिरलक्षितस्य दुष्यन्तमहाराजस्य कोप्यवकाश-स्समापतत् । तदानीमेव प्रेक्षकहृदयेषु शृङ्गारबीजमुप्त भवति, ततस्त-त्समीप जिगमिषोर्महाराजस्य तादात्विक सदर्भपरिकल्पनमेकमेवाल खलु महाकवे कालिदासस्य वर्णनावैदग्धीं सर्वातिशायिनीमभिव्यञ्जयितुम् । एव परस्परावलोकनादिनाऽभिवर्धमाने तयोरनुरागे शृङ्गाररसस्य अङ्कुर समपद्यत । तत्रतत्र हि महाभारतकथामधिक विस्तार्य महाकवि प्रेक्षकानानन्दयामास, स च रसिकैकवेद्य इति ।

एव शृङ्गाररसबीजोद्भेदे समापतितेऽपि द्विदलीभूयकाण्डात्मना परिणामितुमपेक्षितश्च कश्चित्कालविशेष । तदानीं तदुपचयप्रकार विल-म्बितो भवेत । अपिच पत्राणि विस्तार्य शाखा प्रदर्श्य पुष्पोन्मुखो भवितु महान् काल आवश्यक । किंच यदा नायिकानायकयोरनुराग उदियात् तदा ततस्तदभिवृद्धौ तयोर्विश्लेष एव निदानमिति सर्वत्र लोके दृष्टम् । अत एव सैनिकसम्मर्द व्याधजनबाधा च आरण्यकगज-स्याश्रमप्रवेशे निमित्तीकृत्य किमपि सविधान परिकल्प्य नायिकानायकौ विश्लेषयामास । ततश्च दैवयोगेन क्रीडोद्याने परस्परमनयोर्दृष्टिबन्ध-स्समजनि । तन्निमित्तक एव तयोर्विरहसतापस्समभूदित्यप्यवर्णयत् ।

दुष्यन्तमहाराजोऽपि तया विनाऽऽत्मान धर्तुमशक्त. सुहृदा

सह तदीयसौन्दर्यादि वर्णयन् किंचिद्विरहानलसतापमपनेतुमयतत । तथैव शकुन्तलापि स्वसखीभिस्सह विहरन्त्यपि अन्तस्तापेन परमतप्यत । क्रमेण कार्श्यमापन्ने शकुन्तलाशरीरे तत्सस्य मदनबाधेयमिति विनिश्चित्य मालिनीतीरस्थलतागृहे तामुपचारितुमारभन्त । अस्या दशाया सर्वमपि स्वकीय बल प्रहिण्वन् राजा कथमपि शकुन्तला पुनरवलोकयेयमिति निश्चित्य तत प्रस्थाय, अस्मिन् मध्याह्नसमये स्वयमिव शकुन्तलाऽपि, विरहानलसतप्ता प्रायो मालिनीतीर एव वर्ततेति अभ्यूह्य नदीतिरे एव सर्वत्र विचिनोति स्म, यदृच्छया च तदेव लतागृहमुपलब्ध, यत्र सखीभिस्साकमध्यवात्सीच्छकुन्तला । तदानीं परस्पर सखीजनालाप शृण्वतो महाराजस्य मनसि विपरिवर्तमान प्रीतिरसपरीवाहः शृङ्गाररसस्य पल्लवविकासायते स्म । तस्मिन्नेव समये शकुन्तलापि स्वनायक दिदृक्षु तस्योपायान् सखीभ्योऽवबुध्य शुकोदरसुकुमारनालिनीदले स्वानुरागदुष्यन्तकृतोपेक्षणक्रौर्याभिव्यञ्जिका पत्रिका काचन स्वनखैर्विलिलेख । अय खलु सदर्भ शृङ्गाररसस्य मुकुलायते स्म । अनेनैव व्याजेन शकुन्तलादुष्यन्तयो समागम कल्पयितु कालिदासस्य महत्त्वमनन्यलभ्यमन्यादृशमिति, किमु वक्तव्यम् ?

ततश्च सखीषु कस्यचिदेणशावकस्य तज्जननीसश्लेषकामनापदेशेन परावर्तमानासु तदानीमेवानयोरप्यन्योन्यस्सश्लेषस्समापातित , अयमेव तादृशरसस्य कोरकविलासकाल इति ।

ततश्चैवक्रमेण सदृष्टिबन्धमन्योन्यमनुरागमुत्थाप्य सश्लेष करणीय एवेति प्रागेव कृतसकल्प कृतकृत्य दैवमेव तयोर्यद्येवमुन्मस्तको ह्यसो भवेत्तदा नियमेन महानर्थस्समापद्येतेत्यालोच्य तौ विघटयामासेत्यवधेयम् । अपिच शृङ्गाररस यदि फलात्मना परिणम्य आस्वादयोग्य प्रभवेत् तदानीमेव तत्स्वारस्यमुपलभ्येत, नान्यथेति कविस्तत्सश्लेष

विश्लेषान्तमवर्णयदिति जानीम । एतावता प्रबन्धेनैव तथा समाप्येत तदा नैव रसपराकाष्ठा सुज्ञेया । अतएव हि कवि कथामवर्धयत् ।

इतऊर्ध्वं तु महाभारतशकुन्तलोपाख्यानस्य नाटककथायाश्च नैव सबन्धगन्धोपि । अत्रैव कविवर्णनचातुरी दरीदृश्यते

शकुन्तलाऽप्यन्तर्वत्नी भर्तृसान्निध्यमुपागताऽपि तत्तिरस्कृता स्वजननीं मेनका यावदुपेयाय, तावत्सु सदर्भेषु प्रदर्शितस्य कविसामर्थ्यस्य लोकपरिचिते तद्द्वारा प्रेक्षकहृदयेष्वानन्दसम्पादनक्रमस्याप्युपवर्णने स एव कालिदास प्रभवति ॥

अस्मिश्च सदर्भे करुणादयो रसा शृङ्गारोत्तेजका प्राय शृङ्गारमेव रस परिपोषयन्ति ।

अपिच–दूर्वासश्शापनिरूपणे च कवेरभिप्राया बहवोऽवर्तन्त इति प्रतिभाति । तथाहि—शकुन्तलाविरहाधिक्य ततस्तदनुरागपराकाष्ठा च प्रकटय्य शृङ्गाराङ्गत्वेनेतरेषा करुणादीना वर्णनाय शकुन्तलादर्शनेन दुष्यन्तमहाराजस्य विस्मृतिर्जातेत्युपवर्णितम् । यदि च नैव विस्मृतिर्वर्ण्येते तदा करुणस्यैव प्राधान्यप्रतीति स्यात् । महाभारतोक्तिवत् दुष्यन्तमहाराजस्य तद्वृत्तज्ञानेऽप्यज्ञवत् नटने नैव रसपरिपोष इति कवि दुर्वासश्शापमकल्पयदिति विद्म । ततश्च शापवैभव स्फुटीकर्तु सङ्गीतकथाश्रवणधुरीणे सति महाराजे ततस्तद्विरहमनुभवन्नपि तन्निमित्त नैव बुबुध इति काचित्सङ्गतिरुपकल्पिता । अत्र महाकवित्व प्रकाशितम् ।

तथाहि—

नायिकानायकयोरेकस्या उत्कण्ठाऽन्यस्योपेक्षा यद्याविर्भूयात् नैव तदानी रसप्रस्फूर्ति, अत शापतो दुष्यन्तस्योपेक्षाजातेत्य वर्णयत् शकुन्तलादुष्यन्तयो परस्परमवलोकन सभाषण तिरस्कार पूर्वविरहव्यथा रहस्यप्रख्यापनादि परिशीलने एकत्रानन्दः, अन्यत्र

शोकश्च प्रभवति हि पाठकाना तद्वाद्विस्मृतेश्शापनिमित्तकत्वाकथने दुष्यन्तविषये आग्रहस्ततो रसभङ्गश्च जायेतेति ।

किंच नाटककथायामपि सदर्भद्वय प्राकल्पयत् स्मरणोत्पत्त्यर्थ-मङ्गुलयिकदानस्य अनुरागविलासप्रकटीकरणाय सयोजन, शक्रतीर्थे तत्पतन तद्दर्शनसजातशकुन्तलास्मरणकल्पना च महाकवे कालिदासस्य अन्यादृशी चातुरीमावेदयति । अयमेव सदर्भो लौकिकमर्यादा-नुसारीति प्रेक्षकहृदयेषु सगतिरिय कल्पितेति नैवेदमाश्चर्यसपादकमिति ।

मेनकाकृत, शकुन्तलापहरणसविधानमप्यतिशायितमेव–विश्वामित्रोत्पादिता पोषिता च महर्षिणा कण्वेन गृहीतपाणि धृतगर्भा दुष्यन्तेन मारीचाश्रममुपेत्य भरतमजीजनदिति च यदि न ब्रूयात् तदानीं तत्सौशील्यस्य भरताभिजात्यस्य च न्यूनताऽपि सपद्येत । कथाया च रसपरिपोषणाय शापोपहतपतिकृततिरस्कार ततश्च गौतमीशार्ङ्गरवशार द्वताश्च शकुन्तलामुपाक्रुश्य तत्रैव तत्यजुरिति च अगत्या च शकुन्तला राजपुरोहितगेहे कृतवसतिरासीत् तत्रैव कुमारोत्पत्तिश्चेतीममपि सदर्भं उत्कर्षसाधनतया अवर्णयत् । ततश्चाङ्गुळीयकदर्शननिमित्तकमेव शकुन्तलास्मरण तन्मूल च विश्लेषदु खमनुभवन् पूर्व कृततिरस्कार पश्चात्स्वयमेव तप्यमान तदुक्तिमपि स्मार स्मार पर्यतप्यतेति च ॥

अपिच महदन्यादितोप्याश्चर्यावह, तथाहि—मातलिरपि विदूषक कण्ठे निष्पीड्य तद्वारा दुष्यन्तमहाराज रथमधिरोप्य देवविरोधिकालनेमिसहारार्थं स्वर्लोकमुपाधावदिति कविरवर्णयत्, इद च किंनिमित्तकमिति विवेचयाम'–दुर्वासश्शापत शान्तोपि शृङ्गाररसः तदङ्गुळीयकदर्शनसमनन्तरसमुद्बुद्ध दुष्यन्तकृतापराधस्मरणेन श्शोकरसवलितोऽभूत् । अतोत्र वीररसस्सपादनीय । वीररससपादने तु करुणरसपराकरणमाचरणीयम् । अतएव विदूषकहिंसा तन्मूल दुष्यन्तस्य क्रोधोद्गममपि

वर्णयामासेति प्रतीमः । कविरपि 'किंनिमित्तादपि मनस्संतापादायुष्मान् विक्लबो दृष्टः पश्चात्कोपयितुं तथाकृतवानस्मि' इति मातलिवचनं मन्ववादीत् ।

किंच मानुषसंचारानर्हमारीचाश्रमप्रवेशे दुष्यन्तमहाराजस्य कथं वा शकुन्तलासमागमः ? तत्स्थानस्य देवसंचारयोग्यत्वात् अतो देवताकार्यं परिसमाप्य इन्द्रविमानारूढः स्वर्गाद्राजधानीं प्रत्यागतो मारीचाश्रमं प्रविवेशेति वर्णितमिति प्रतिभाति ।

मारीचाश्रमेऽपि शकुन्तलासमागमे प्रथमतो भरतानयनादिकं व्यञ्जयति कवेर्महत्त्वं, तत्रापि दुष्यन्ताधिष्ठितस्थलं स्वयमेव शकुन्तला समासीदति वर्णनं च कवेः कालिदासत्वं व्यवस्थापयति, नह्यन्ये कवयः प्रभवन्ति वर्णयितुमेवम् । सिंहशावकेन विहरन्तं भरतं प्रति 'शकुन्तलावण्णं पेक्ख' इत्यर्थद्वयबोधकसखीजनवचनमात्रेणैव चिरकालविरहेयोः कृतसमागमपर्यालोचनायां कालिदास एक एव कविमूर्धन्यपदवीमधिरोढुं शक्त इति स्पष्टमवगम्यते ।

अत्रैव संदर्भे परमन्यदप्यालोचनीयम्—दुष्यन्तमहाराजोपि शकुन्तलामतिपरुषवचनैर्दूषयित्वा तिरश्चकार । शकुन्तलापि विनयमनतिक्रम्य स्वस्या विवाहविषये प्रामाण्यजननार्थं अनेकधा प्रयतमानापि शिलामयमिव कठिनतमं तदीयहृदयमवबुध्य निराशा शून्यहृदया अवर्तत, एवंविधयोरनयोर्मनोवृत्त्योः पर्यालोचनायां अस्मिन् समागमे श्रमो महानिति प्रतिभाति । अयं हि संदर्भः पूर्वोक्तशृङ्गाररसफलास्वादनसमय इति इदानीं प्रेक्षकहृदयगामिनीयं रसपरिपूर्तिरिति निस्संशयमावेदयामः ।

इदानीं पूर्ववत् संश्लेषोपि नैव विश्लेषान्तो वर्णनीयः यथाहि पक्कफलं अनुपभुज्यमानं वैवर्ण्यं म्लानिं च भजते तथा प्रकृते शृङ्गाररसोपि एतावता फलरूपत्ववर्णनेन परिपुपूर्णः पुनरपि न तस्य कश्चित्

परिपाक इति कथा समपूर्यत महाकविना ॥

यद्यपि लोके दपत्योर्यूनोरनुराग प्रायस्सश्लेषादिव्यापारेष्वेव पर्यवस्यति शृङ्गाररसस्थायिभूतरतिरेव परमपुरुषार्थ । तथापि पुत्रोत्पत्त्यनन्तरमेव स रस सफल इत्यभिसधाय प्राय कवय शृङ्गारनिरूपणप्रकरणेषु दपत्योराविवाहात् पुत्रलालनादिपर्यन्तमुपवर्ण्य विरमन्तीति कविरप्यय कथासमाप्तिमचीकरत्तथैव ॥

किंच नाटकरत्नेऽस्मिन् कथ सदर्भविपर्ययश्च नायिकानायकयोर्गुणोत्कर्षनिष्कर्षक इति च वय सादरमावेदयाम । तथाहि—मृगयोद्देशेन वन गतो महाराज यदृच्छया कण्वाश्रमे शकुन्तलामवेक्ष्य तत्सौन्दर्यमोहित कामपरवशो गन्धर्वविधिना तामुपयम्य त्वरितमाह्वाययामि त्वा राजधानीमिति प्रतिज्ञाय स्वयमुपागता राजधानीमवरोधजनभयाद्वा असन्निकर्षदोषाद्वा न तामनाह्वयत्। तत कालवशात्स्वयमेवागता सपुत्रामपि शकुन्तला स्वागमननिमित्तमावेदयन्तीमप्यन्त करणप्रवृत्तिमप्यगणय्य उदास्त । तत अशरीरवाणीश्रवणसमनन्तरमेव परिगृहीतवत महाभारतदुष्यन्तस्य एतन्नाटकीयदुष्यन्तस्य च कीदृश वैलक्षण्यमित्यालोचयन्तु भवन्त ॥

कण्वाश्रमे पुत्ररत्न प्रसूय युवराजपदवीमधिरोढुमुचितेन तेनैव साकमुपागताया पतिसन्निधिं निर्दयेन पतिना तिरस्कृताया अतएव शत्रुमुपक्रान्ताया भारतशकुन्तलाया एतन्नाटकीयशकुन्तलायाश्च महदन्तरमिति सविनयमावेदयामश्च ॥

'नाटकेषु शाकुन्तल तस्मिन् चतुर्थोऽङ्क तस्मिन्नपि श्लोकचतुष्टय सारतमम्'' इति वचनाद्यनुरोधेनान्येषा वर्णनासदर्भपरिकल्पनतत्तदनुगुणपात्रपरिकल्पनादीना प्रकर्षवर्णने ग्रन्थविस्तरभयादुपरमाम इति सादरमावेदयाम

इति सर्वं भद्रम्

य आजि रामानुजयगार्

॥ श्रीरस्तु ॥

## संस्कृतभाषा.

श्रेयो मे विदधातु शारदशशिश्रीभासुराभा सुरा
हारासारनिरासकारिमधुरव्याहारिणी हारिणी ।
मुक्ताभूषणपोषणस्मितलवश्रीसाधुनासा ऽधुना
लावण्येन निजेन निर्जितवती रम्भारती भारती ॥

भोभो भूसुरभासुरमहाशया किंचित् अद्य विनयेन विज्ञापयामि भाषा नाम अर्थवदक्षरपदवाक्यात्मिका शब्दसंहतिः. काचित् भाष्यते अनया इति भाषा इति तत्र व्युत्पत्तेः । यस्याः किल भाषायाः परब्रह्मस्वरूपत्वेन व्यवहारः । "विन्देमहि च तां वाणीममृतामात्मनः कलाम्" इत्यादिना । यस्याश्च देवीत्वेन उपचारः—"ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यादिना । भाषाप्राशस्त्यमुपवर्णितमाचार्यदण्डिनाऽपि काव्यादर्शे—

इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

इत्यादिना । अस्य खलु शब्दब्रह्मणः विवर्तद्वयमस्ति देवभाषा मनुष्यभाषा चेति । तत्राद्या द्विविधा-वैदिकी लौकिकी चेति । वैदिकवाक्येषु तावत् आनुपूर्वीनियमस्य सर्वत्र प्राधान्यम् । लौकिकवाक्येषु तु पदानुपूर्वीनियमाभावः इति तयोर्विवेकः । यस्य भाषाद्वयस्य अनुशासनं श्रीपाणिनिमतानुसारेण भगवता पतञ्जलिना मनोवाक्कायमलनिर्मोचनकारिणा लोकानुग्रहणार्थं व्याकृतं महाभाष्ये । तत्र

द्वितीया मानुषभाषा नानारूपा देशकालकर्मानुगुण्यात् । तत्र माग ध्यादि भाषाषट्क विकृतिरूपम् । तासा तु सामान्यत प्राकृतसंज्ञा ॥

भाषोपयोगक्रम

पुरुषाणामनीचाना सस्कृत स्यात्कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीना च योषिताम् ॥
सस्कृत सप्रयोक्तव्य लिङ्गिनीषूत्तमासु च ।
कार्यतश्चोत्तमादीना कार्यो भाषाविपर्यय ॥
योषित्सखीबालवेश्याकितवाप्सरसा तथा।
वैदग्ध्यर्थं प्रदातव्य सस्कृत चान्तरान्तरा ॥

इत्याद्यभियुक्तोक्त्या देवमानुषभाषाद्वयमध्ये देवा देवभाषामेव ब्रुवते। अत एव ते गीर्वाणा । तद्भाषा च गीर्वाणवाणी। भूसुरास्त्वत्र प्रमाणम्। आधुनिकब्राह्मणास्तु देवभाषा मानुषभाषा च सद्-र्मानुसारेण वदन्ति। यतस्ते देवत्वमानुषत्वरूपधर्मद्वयविशिष्टा । ब्राह्म-णाना पूज्यत्व यथा कल्किपुराणे—

भूदेवा ब्राह्मणा राजन् पूज्या वन्द्या सदुक्तिभि ।
चातुराश्रम्यकुशला मम धर्मप्रवर्तका ॥

इति। तादृशभूदेवत्वपरिपालकेषु यजनयाजनादिवैदिककर्मसु इदानी-मपि ब्राह्मणा तामेव दैवीं भाषा प्रयुञ्जते। पर तु "शूद्र-रूपा हि ते द्विजा" इति पराशरोक्तरीत्या पाविनि कलौ इतर-वर्णधर्मानाश्रयन्त त एव भूसुरा लौकिकव्यवहारेषु अनन्यगतिक-त्वात् प्राकृतभाषा प्रयुञ्जते। उपाधिभेदेन भाषान्तरस्वीकरण सर्वैरपि अभ्युपगतम्। तद्यथा महाभारते रहस्यगोपनार्थ विदुर युधिष्ठिर प्रति म्लेच्छभाषया ब्रूते। श्रीमद्रामायणेऽपि महर्षिवचनार्थं इल्वल सस्कृत वदति। स्वोक्तिप्रामाण्यार्थं जानक्या साक सस्कृत वदति

भगवान्मारुतिः । "वाचं चोदाहरिष्यामि द्विजातिरिव संस्कृताम्" इति ह्युदात्ताशयप्रकटनार्थं तावत् नाटकेषु नीचपात्राण्यपि संस्कृत-भाषामेवाश्रयन्ते । एतेन संस्कृतभाषाप्रयोगस्तु ब्रह्मक्षत्रिय वैश्य-रूपद्विजातीनामनादिसिद्धम्, इति फलितम्

प्रकृते तावत् समस्तकल्याणगुणाभिरामे श्रीकृष्णसार्वभौमे मही-मण्डलमण्डनायमानमहीशूरदेशं पालयति सति धर्मस्य अभ्युत्थानं अध-र्मस्य ग्लानिरिति सुस्फुटमेव सम्यक्परिपश्यतां सर्वेषाम् । यथैव श्रीभोज-राजकाले पण्डिताखण्डलानां प्रोत्साहबाहुल्यमासीत् तथा इदानीम-पि पण्डितानां कविसार्वभौमानां च प्रोत्साहरूपानुग्रहः क्रियत एव श्रीमहाराजेन । कुविन्दादीनामपि इतः परं संस्कृतभाषाध्ययनं कार-यितव्यं समदृष्टित्वं समप्राधान्यपरिकल्पनं च इदानींतनराजपुरुषाणां अयत्नसिद्धमिति अकथितमपि ज्ञायत एव ।

तथापि अस्मद्देशीयविश्वविद्यालयघटकाः केचन संस्कृतभाषाया आवश्यकाभ्यासावकाशं तिरयित्वा तादृशभाषायाः प्राधान्यस्य ह्रासं कल्पयामासुरिति जिह्रेमि विज्ञापयितुं तत्रभवतां भवतां सन्निधाने ॥

तत्तादृशदेवभाषायाः प्राधान्यस्य न कदापि ह्रासः कार्यः इत्यत्र सन्त्यसंख्याकानि कारणानि । तत्र दिक्प्रदर्शकन्यायेन कतिप-यकारणान्येव प्रकाश्यन्ते "अनुक्तमन्यतोग्राह्यम्" इति न्यायेन अधु-नातनपण्डितवर्येभ्यः शेषं ज्ञेयमित्यभ्यर्थये ॥

प्रथमं तावत् अनुकरणं हि शिष्टानां अभ्युदयपरंपरा हेतु-रिति न्यायेन वयमिदानीं अशन वसन चिकित्सा विचिकित्सा-दिलोकव्यवहारेषु पाश्चात्यानेव अनुकुर्वन्तः दैनदिनव्यवहारसाम्मर्दे मग्नोन्मग्ना भूत्वा तत्तटमनधिगच्छन्तः अन्धकारं परामर्शपरायणा अभवाम । चक्रवत्परिवर्तते खलु मानुषचरित्रम् । इग्लाण्डुदेशे तावत्

लाटिनादिश्रेष्ठभाषाणां यथा प्राधान्यं कालक्रमेण उत्तरोत्तराभिवृद्धिं प्राप्नोत् तथा अस्मद्देशीयश्रेष्ठतमभाषा संस्कृतापरनामधेया तत्समप्राधान्यं प्राप्तुमर्हतीत्यत्र कोवा संदिहीत । पाश्चात्यदेशे तावत् प्रथमकालावस्थायां क्याटरबेरिकथारूपमतग्रन्थानां निर्माणाध्ययनादीनां प्रभूनतरं प्राधान्यमासीत् । तथैवास्मिन् भरतखण्डे वेदाध्ययनस्य सर्वत्र प्राधान्यमासीत् । ततश्च इंग्लाण्डदेशे कविकाव्यकलादीनां प्राशस्त्यं अप्रतिहतमासीत् । तथैवात्रापि—

नियतिकृतनियमरहिता ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥

इति श्रीभट्टमम्मटोक्तरीत्या कालिदासादिमहाकवि निर्माणानां अपरिमितं प्राशस्त्यमासीत् । तृतीयकालावस्थायां आंग्लदेशे शिष्टानुकरणं नाम तृतीयावस्था देशभाषाया उदपादि । तादृशशिष्टानुकरणावस्थायामेवेदानीं वयं वर्तामहे । आंग्लदेशीयास्तु प्रजारञ्जनावस्थानामकचतुर्थावस्थां शास्त्रीयावस्थानामकपञ्चमावस्थां च देशभाषाया अनुभूय षष्ठावस्थां प्रवेष्टुं पर्युत्सुकाः सुसमयं प्रतिपालयन्ति । वयं तु नैतादृशावस्थाक्रमणे शक्ताः । तृतीयाऽवस्थारूपशिष्टानुकरणमेवेदानीं नश्शरणम् । नातिचिरात्प्रागेव ग्रन्थमुद्रणपद्धतिः प्रवर्तिताऽऽसीत् किल । लेखनवाचनरूपविद्याप्रसृतिरपि नाद्यापि सर्वजनीना । एवं स्थिते सर्वावस्थातिक्रमणं तत्रापि एकपदेनैवातिक्रमणं केवलं साहसमेव । आदर्शप्रायदेशे यथा आंग्लभाषाध्ययनक्रमणे अनुसृतमासीत्तथा अस्माभिरपि अनुसरणं कार्यम् । कृषिकर्मसु वा वणिक्कर्मसु वा राजकार्यव्यवहारेषु वा इंग्लाण्डदेशीयाः कालातिक्रमणं न सहन्ते, देशकालवैपरीत्यशङ्का तान् बाधते । "यत्राधिका सा मता" इति न्यायमनुरुन्धन्ति प्रायः पाश्चात्याः । प्रकृते संस्कृतभाषाभ्यासस्तु

सर्वेषां महाजनानां सकलानां भाषाणां च परमोपकारक इति कृत्वा संस्कृतभाषाध्ययनस्य अवश्याध्ययनभाषाकोटौ स्थित्यवकल्पनं सकलश्रेयसां निदानमिति दिक् ॥

द्वितीयं तावत्कारणमिदानीं निरूप्यते "श्रीमत्कर्णाटकदेशप्राशस्त्यदृष्ट्याऽपि संस्कृतभाषायाः निरतिशयप्राधान्यं कल्पनीयम्" सन्ति बहूनि कारणानि सुगृहीतनामधेया वङ्गदेशीयविद्वद्वरिष्ठा आशुतोषमुखर्जीनामकमहाशयाः तथा श्रीज्ञानशरणचक्रवर्तिनामकमहाभागाश्च वारंवारं अस्मद्देशीयानां सर्वेषां विद्यार्थिनां अभ्यासावकाशः कल्पनीयः संस्कृतभाषायामित्युपदिदिशुः । सति कुड्ये चित्रकर्मेति न्यायेन श्रीकर्णाटकभाषाभिवृद्धिरपि संस्कृतभाषाध्ययनाधीना वर्तते । कतिपयपदसमुदायवती किल कर्णाटकभाषा । तद्ग्रन्थकर्तारः श्रीलक्ष्मीशपंपषडक्षरिदेवादयः निजसंस्कृतभाषाध्ययनबलादेव कर्णाटकग्रन्थनिर्माणे समर्था अभूवन् इत्यत्र तेषां ग्रन्था एव प्रमाणम् । पदवासनां विनैव ग्रन्थरचना न यत्रकुत्रापि विश्रुता । संस्कृतपदानां तु प्रयोगविषयो महान् इत्यत्र महाभाष्यादिग्रन्था एव प्रमाणम् ॥

उर्दूनामकभाषां भरतखण्डे सर्वजनीनभाषात्वेन परिकल्पयितुं विद्वद्वरिष्ठाः अवतिष्ठमानाः सन्ति । तत्तादृशोर्दूभाषादृष्ट्यापि तन्मातृभाषारूपसंस्कृतभाषायाः प्राधान्यं अपरिहार्यमेव । बालपाठेषु तावत् बालानां देशभाषां प्रथममुपदिश्य प्रौढपाठेषु संस्कृतभाषामध्याप्य अन्तरान्तरा यथारुचि कर्णाटकभाषाभ्यासं वा उर्दूभाषापरिशीलनं वा आज्ञाप्य सर्वत्र संस्कृतभाषायाः यदि प्राधान्यं स्यात् तर्हि शते पञ्चाशन्न्यायेन सकलभाषाभिवृद्धिर्वा सकलप्रौढिमसंपादनं वा सुगममेव । तद्विपर्यासेन संस्कृतभाषायाः "सर्वथा प्राशस्त्यं मास्तु" इति प्राज्ञाः केचन प्रत्यवस्थानं कुर्वन्ति यदि तर्हि कर्णाटकदेशाभिवृद्धेः तिरयणं तैरेव प्रारब्धं इत्यत्र

कोवा सदेह' स्यात् । अभूतपूर्वे किल श्री विश्वविद्यालय सकलदेशाद-र्शरूपे अस्मन्महीशूरदेशे। तादृशविद्वन्मण्डलीप्रोत्साहेन सस्कृतभाषाया अभिवृद्धिर्भविता । कर्णाटकभाषात उर्दूभाषाया अत्यन्तसन्निकृष्ट सबन्धस्सस्कृतस्य। एवस्थिते पूर्वोक्त चतुर्थपञ्चमावस्थयो अवकाश एव न स्याद्देशभाषाणाम् । कार्यनियतपूर्ववृत्ति कारणमिति न्यायात् कर्णाटक, उर्दू, त्रैलिङ्गय, तमिलुप्रभृतिदेशभाषाणा प्राशस्त्य प्राबल्यच येये इच्छन्ति ते सर्वे "प्रतिबिम्बालकृतिविधिकुशलो बिम्बालकृतिमा-दधत्ते" इत्युक्तरीत्या सस्कृताध्यापनस्यैव प्राधान्य कल्पयेयु । सर्वत्र ग्रामेषु पत्तनेषु च सस्कृताध्यापकाना नियमन दावणगेरे ग्रामे कर्णाटकप्रौढपाठशालानामककालेजुस्थापन चिन्तामणिमहाग्रामे त्रैलिं-गयभाषाप्रौढपाठशालानिर्माण च अस्मद्देशस्य परमश्रेयस्साधनमिति तत्का-रणीभूतसस्कृतभाषाया अवश्याध्ययनरूपनियमनमपि श्रीविश्वविद्या-लयघटकै शिष्टसभासद्भि कार्यमित्यभिप्राय द्वितीय कारणम् ॥

मिल्लरुरिपोर्टुनामकधर्मशासनरीत्याऽपि इतरभाषादृष्ट्या सस्कृ-तभाषाया एव प्राधान्य कल्प्यमिति विज्ञापयामि । तद्यथा— मैसूरुदेशस्थितषष्टिलक्षसख्याकप्रजाना मध्ये प्रायश ब्राह्मणेतरप्रजा एव भूयस्य सन्ति। प्रजाना विनयाधानरक्षणभरणादिराज्यभारनिर्वहणे तासामेव सर्वत्र प्राधान्यमिति विदितमेव सर्वेषाम् । तादृशप्राधान्य नास्मद्धर्मपरिज्ञानमन्तरा सुसाध भवति । धर्मपरिज्ञान तु स्मृति-ग्रन्थाध्ययनाधीनानिति कृत्वा ब्राह्मणेतरप्रजाना सर्वासामपि सस्कृ-ताध्ययन अवश्य कारयितव्यम्। सस्कृतपाठशालासु ब्राह्मणबालकै-स्सहाध्ययन नाद्यापि सार्वत्रिक कृतम् । इग्लिष्पाठशालासु इग्लिष्-भाषाध्ययनेन साक सम्कृताध्ययनस्य यदि अवकाश न दीयते तर्हि नूतनविश्वविद्यालयेन आस्माकीनेनानेन कोवोपकार ? ब्राह्मणे-

तरप्रजाना अपकार कृत स्यात्। प्रजाप्रतिनिधिसभाया ब्राह्मणेतरप्रजा संस्कृतभाषाध्ययने परमादरवत्य तद्भाषाध्यापनावकाश बहुधा प्रार्थयेयु। अत तत्सन्तोषार्थं वा प्राशस्त्य देयम्॥

सकलभरतवर्षस्य अभिवृद्धिपरिचिन्तनदृष्ट्याऽपि संस्कृतभाषाया एव प्राधान्यमपरिहार्यं इति चतुर्थकारणम्— तद्यथा देशभाषानुगुण्येन भरतवर्षस्य विभागा परिकल्प्या इति आधुनिकशिष्टाना अभिप्राया समुल्लसन्ति। आन्ध्रदेश, द्राभिडदेश, कर्णाटदेश, महाराष्ट्रदेश, उर्दु अथवा हिन्दीदेश —इत्येवरीत्या देशविभागकरणे सकलभारतेयाना ऐकमत्यसंपादनायाय सुगम पन्था इति तेषामाशय। एकस्मिन्नेव देशे वसति, एकभाषाप्रवचन, एकदेवतोपासना, एकराज्याभिपालन इत्यादीनि एकीकरणस्य प्रबलानि कारणानीति विदितमेव सर्वेषाम्। वङ्गदेशे तावत् आंग्लभाषाभ्यास त्रिशतवर्षेभ्य प्रागेव उपक्रान्त। तदादि संस्कृतभाषाप्राशस्त्य दिनेदिने बालचन्द्र इव वृद्धिं प्राप्नोति। न नश्यति। सुगृहीतनामधेयेन श्रीराधाकान्तदेवेन शब्दकल्पद्रुमस्य निर्माण, सुगृहीतनामधेयेन श्रीतारानाथतर्कवाचस्पतिना वाचस्पत्यनामकामूल्यग्रन्थनिर्माण च बंगाळाख्यवंगदेशे समुदपादिषाताम्। समस्तसंस्कृतग्रन्थाना प्रथममुद्रणप्रकाशनादीनि महाकार्याणि काळीघट्टायामेव समभवन्। किं बहुना देवनागरलिपे काळीघट्टेव जन्मस्थानम्। बोबायि आधिपत्ये तादृश देवनागरग्रन्थाना बालबन्धुलिप्या विलक्षण मुद्रण परिकल्प्यते। मद्रासु आधिपत्ये तु एतादृशग्रन्थवाचकास्सन्तीति तेषा महाभाग्यम्। सकल देशादर्शभूते आस्माकीने महीशूरदेशे तावत् कीदृशी कीर्ति ग्रन्थनिर्माणे वा? ग्रन्थमुद्रापणे वा? ग्रन्थपठने वाचने वा? कीदृशी अस्माक प्रशस्ति

सुगृहीतनामधेयस्य श्रीमदाशुतोषमुखार्जिनामकमहाशयस्य अभिप्रायरीत्या संस्कृतभाषायाः परमं प्राशस्त्यं परिकल्पनीयं वा नवेति विमृशन्तु महान्तः । तत्तादृशमहाभागानां उदाराशयस्य विरोधोत्पादने हेतुभूतानां महाशयानां शाश्वतकीर्तिः कीदृशी? श्रीशारदासिंहपीठरूपे अस्मद्विश्वविद्यानिलये सकलकार्यनिर्वाहधौरधर्यं च कीदृशम्? प्रधानधर्माधिकारिमहाभागानां श्रीमहाराजसार्वभौमानां उदारचरित्रं च कीदृशम्? इत्याद्यनेककारणपरिचिन्तने संस्कृतभाषायाः प्रथमं प्राधान्यं परिकल्पनीयमिति फलितं भवत्येव ॥

अथेदमत्र पञ्चमं प्रबलकारणम्---अयं च कर्णाटकदेशः, कर्णाटकभाषायाः परमं प्राधान्यं सर्वजनस्पृहणीयमेव, मातुः स्तन्यपानं विना शिशोर्जीवनं कथम्? कर्णाटकग्रन्थनिर्मातारः श्रीलक्ष्मीशः, श्रीपंपः, श्रीषडक्षरिदेवः प्रभृतयः किं केवलकर्णाटकभाषाभ्यासमात्रबलेन तत्तादृशमहाग्रन्थानां निर्माणे प्रभवितारस्समभूवन्? संस्कृतभाषाध्ययनमन्तरा कर्णाटकभाषायाः कथं प्राशस्त्यम्? पुराकिलास्मिन् देशे धनिकगृहेषु पल्लीषु द्वारप्रकोष्ठशालासु उपाध्यायप्रतिष्ठापितविद्याशालासु पल्लीमठाख्येषु विद्यामधिगतवन्तः अत्यन्तदरिद्रावस्थायां स्थिताः श्रीकाळिदास भवभूति बाण मयूराद्यः अनेके ग्रन्थनिर्माणे समर्था अभूवन् । इदानीं तु प्रशस्तिपत्रिकासंपादनसमर्था आधुनिकपण्डिताः पुरातनकविकृतग्रन्थसदृशग्रन्थप्रणयने न केवलमसमर्थाः किंतु तत्पठनेपीतीत्थं मन्दभाग्यस्यास्मद्देशस्य परं परं को वा न वेत्ति? किं संस्कृतभाषा तत्र अयोग्या? तर्हि इग्लेंड्, जर्मनि, अमेरिका, फ्रान्स् प्रभृतिषु भूखण्डेषु विद्वन्मणिभिः कुतो वा प्राशस्त्यं संस्कृतभाषायाः कल्पितमस्ति? किं संस्कृतभाषा-

ध्ययनमन्तरा श्रीकर्णाटभाषाया वा उर्दूभाषाया वा पुरोभिवृद्धिस्स्यात्? कारण विना कार्यस्योत्पत्तिरपि स्यादेव ॥

कर्णाटकदेशे श्रीकर्णाटप्रभुपालिते श्रीकर्णाटमहाजनावलम्बनयोग्ये अस्मिन् श्रीमैसूरुनाम्नि आदर्शदेशे सस्कृतभाषाया प्राशस्त्य न देयमिति केवल शोचनीयोऽय विषय । किमेतादृशदेशस्य परमशोचनीयावस्थापरिकल्पनार्थं श्रीविश्वविद्यालयनिर्मिति? एतादृशदिव्यभाषाया अप्रागल्भ्यसम्पादनायैव वा अनेकलक्षपरिमितमहदर्थोत्सर्ग? एतादृगमेव वाऽस्मद्भागधेयम्? किमिदमेव ओरियटल्सैड्नामकपरमप्राधान्यपरिकल्पनम्? किं बहुना—एवमालोच्य निश्चित्य अयमप्राशस्त्याविषय अस्मद्देशहितैषिभिस्सर्वैरपि परिचिन्तनीय ॥

आस्माकीन श्रीविश्वविद्यालयनिर्माणस्य प्रथमे वत्सरे कान्वोकेषन् नामकसुधर्माख्यसभाया सर्वज्ञपीठाधिरोहणनिपुणै श्रीकृष्णराजसार्वभौमविद्वन्मणिभि अस्य श्रीविश्वविद्यालयस्य सर्वतोमुखनैपुण्यरूपे एफिषेन्सि परिपालनपरिपोषणविषये किमाज्ञप्तम्? तत्तादृक्षमहदाज्ञापरिपालन च यदि पण्डितवर्यै परिपालनीय तर्हि सस्कृतभाषाया प्रथमप्राधान्य सर्वदा परिपोषणीयमेव स्यात् ॥

इत प्राक् पञ्चशतवत्सरेभ्य आरभ्य श्रीमन्महीशूर दिव्यसिंहासनाधिष्ठितराजश्रेष्ठै श्रीमदिन्दुकुलावतसै सस्कृतभाषाप्रोत्साहरूपसत्यधर्मपरिपालन एतावत्पर्यन्त परमादरेण भक्त्या च यत्कृत, यादृशधर्मरक्षणेन सकले प्रपञ्चे "सस्कृतोद्धरणशीला मैसूरु श्रीमन्महाराजसार्वभौमा" इति यादृशी कीर्ति विस्तृताऽऽसीत्, पुण्यपत्तन सस्थानस्य महदापत्तिसम्प्राप्ति काले यत्सस्थान तत्रस्थितविद्वद्वरिष्ठाना कान्दिशीकावस्थागताना सरक्षणस्थानमासीत् तादृशमहामहिमविशिष्टे अस्मिन्

मैसूरुराज्ये संस्कृतवाण्या न कदापि महिमह्रासो भूयादिति भगवन्तं प्रार्थयामः ॥

लक्ष्मीविलाससुभगं विबुधालिवृद्धि-
हेतुं सुदर्शनजितारिमथाविगीतम् ।
सत्योद्धृतिप्रवणमर्जुनचित्तभाजं
कृष्णं धरापतिमवत्वविता स धर्मः ॥

इति शम् ॥

**मोक्षगुंड लक्ष्मीपतय्य**

॥ श्री ॥

## ज्योतिश्शास्त्रस्य वेदमूलत्वनिरूपणम्.

एक कल्पयुगाब्दमासदिवसाद्यौपाधिकाकारवान्
काला यस्य गतागतै कलयते सुस्पष्टता देहिनाम् ।
नित्य यस्तमसोऽभिरक्षति जगत्साक्षी ग्रहाणा पति
ज्योतिर्वेदमयोऽव्ययस्सभगवान्भानुश्शुभायास्तु न ॥

अथास्मिन् शास्त्रे ज्योतीरूपाणा सूर्यादिग्रहाणामश्विन्यादिनक्षत्राणा च गति, स्थिति, स्वरूपादिप्रतिपादनात् एतच्छास्त्र ज्योतिश्शास्त्रमिति प्रसिद्धम् । तथाच गर्गसिद्धान्ते—

ज्योतीरूपस्स्वय सूर्य चन्द्राद्यास्तत्करै खगा ।
ज्योतीरूपास्स्युरर्कादिखेटज ज्यौतिष स्मृतम् ॥

इति ॥

### शास्त्रस्य अनादित्वम्

'कल्पतन्त्राणि तन्वानाह' (तै ब्रा ३-१२-९) तन्त्राणि षडङ्गानीति भाष्यम् । छान्दोग्योपनिषदि सप्तमाध्याये नारदसनत्कुमारसवादे ज्योतिश्शास्त्रमपि राशिनक्षत्रविद्यापदाभ्यामुदाहृतम् ।

तन्त्रवार्तिके अशीतितमे पुटे—"ज्योतिश्शास्त्रेऽपि युगपरिवर्तपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागेन तिथिनक्षत्रज्ञान अविच्छिन्नसम्प्रदायगणितानुमानमूलम्, ग्रहसौस्थ्यदौस्थ्यनिमित्तपूर्वकृतशुभाशुभकर्मफलविपाकसूचन, तद्गतशान्त्यादिविधानद्वारेण वेदमूलम्" इति दृश्यते । अतोऽस्य शास्त्रस्य क्वचिदनुभवमूलत्व क्वचिद्वेदमूलत्व च प्रतिपादितम् ।

स्वय स्वयभुवा सृष्ट चक्षुर्भूत द्विजन्मनाम् ।
वेदाङ्ग ज्यौतिष वेदै सम ब्रह्ममुखोद्गतम् ॥

इत्याह गर्ग । नारदोपि—

विनैदखिल श्रौतस्मार्तकर्म न सिध्यति ।
तस्माज्जगद्धितायेद्र ब्रह्मणा निर्मित पुरा ॥ इति ॥

## शास्त्रप्रयोजनम्

'चित्रापूर्णमासे दीक्षेरन्' 'फल्गुनीपूर्णमासे दक्षिरन्' (तै स ७-४-८) 'यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते।' (तै ब्रा १-५-२) 'उदगयनपूर्वप क्षाह पुण्याहेषु कार्याणि' (आप गृ १-२) इत्यादिश्रुतिस्मृत्युक्त-तिथिनक्षत्रादीना ज्योतिश्शास्त्रैकगम्यतया तच्छास्त्रज्ञानाभावे तत्तत्कर्म-कालस्वरूपस्यैव दुर्ज्ञानतया तत्तत्काले विहिताना कर्मणा अनुष्ठा-नमपि सुतरामुत्सन्नमेव स्यादिति स्फुटमेव प्रयोजनम् ।

नच केवल वैदिककर्मानुष्ठानोचितकालज्ञापनेनैवास्य शास्त्रस्य सप्रयोजनत्वमितिमतव्यम्, जैत्रयात्रावाणिज्यक्रयविक्रयकृषिबीजार्पणा-द्यनेकलैकिककर्मानुष्ठानोचितकालज्ञानस्यापि ज्योतिश्शास्त्रैकायत्ततया एतच्छास्त्र सर्वतोमुखतया सप्रयोजनमिति स्पष्टमेतत् ॥

## शास्त्रप्राशस्त्यम्

वेदा हि यज्ञार्थमभिप्रवृत्ता कालानुपूर्वा विहिताश्च यज्ञा ।
तस्मादिद कालविधानशास्त्र यो ज्यौतिष वेद स वेदयज्ञान् ॥
(वेदाङ्गज्यौतिषम्)

दशदिनकृतपाप हन्ति सिद्धान्तवेत्ता
त्रिदिनजनितदोष तन्त्रवेत्ता नराणाम् ।

करणभगणवेत्ता हन्त्यहोरात्रजात
दिनदळकृतदोषं हन्ति योगादिवेत्ता ॥
एवंविधस्य श्रुतिनेत्रशास्त्रस्वरूपभर्तुः खलु दर्शनं वै।
निहन्त्यशेषं कलुषं जनानां षडब्दजं धर्मसुखास्पदं स्यात् ॥
(माण्डव्य)

जानन्ति शाकुनं कालं तं देवा ब्राह्मणं विदुः।
ससांवत्सरिके देशे वस्तव्यं भूतिमिच्छता।
चक्षुर्मूर्तिर्हि यत्रैष पापं तत्र न विद्यते ॥ (वराहमिहिर)

अथैतच्छास्त्राध्ययनेन ब्रह्मात्मककालज्ञानसंभवात् मोक्षप्राप्तिपर्यन्तान्यपि फलानि प्राप्यन्ते। यथा—

तिथेश्च श्रियमाप्नोति वारादायुष्यवर्धनम्।
नक्षत्राद्धरते पापं योगाद्रोगनिवारणम्।
करणात्कार्यसिद्धिं च लभते नात्रसंशयः ॥ (नारदीयसंहिता)
दिव्यं चक्षुर्ग्रहाणां तु दर्शितं ज्ञानमुत्तमम्।
विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम् ॥
ग्रहलोकमवाप्नोति पर्यायेणात्मवान्नरः ॥ (सूर्यसिद्धान्त)
यज्ञकालपरिज्ञानात् अश्वमेधफलं लभेत्।
पुण्यकालं च यो वेत्ति स याति परमां गतिम् (संहितार्णव)
यो ज्यौतिषं वेत्ति नरस्स सम्यक् धर्मार्थकामान् लभते यशश्च ॥
(भास्कर)

कालज्ञानी कथं याति परमां गतिमुच्यते।
नित्येश्वराश्रितं कालं जानन्नीशत्वमाप्नुयात् ॥
न सांवत्सरपाठी च नरके परिपच्यते।
ब्रह्मलोकप्रतिष्ठां च लभन्ते दैवचिन्तकाः ॥ (वराहमिहिर)

**शास्त्रस्य वेदाङ्गत्व निरूपणम्**

वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञा प्रोक्तास्ते तु कालाश्रयेण ।
शास्त्रादस्मात्कालबोधो यतस्स्यात् वेदाङ्गत्व ज्यौतिषस्योक्तमस्मात् ॥
(भास्कर)

अङ्गेष्वपि चक्षूरूपत्वमस्य शास्त्रस्य—

शब्दशास्त्र मुख ज्यौतिष चक्षुषी च श्रोत्रमुक्त निरुक्त चकल्प करौ ।
या तु शिक्षाऽस्य वेदस्य सा नासिका पादपद्मद्वय छन्द उक्त बुधै ॥
(भास्कर)

शुभाशुभफल भूतभविष्यद्वर्तमानजम् ।
ग्रहणोत्पातकादिश्च येन शास्त्रेण वेद्यते ॥
तच्छास्त्र ज्यौतिष वेदनयन मुनयो विदु । (शिष्टवाक्यम्)
वेदस्य निर्मल चक्षु ज्योतिश्शास्त्रमुदीरितम् ॥ (गर्गसहिता)
मुखमर्धं शरीरस्य सर्व वा मुखमुच्यते ।
तत्रापि नासिका श्रेष्ठा नासिकायाश्च चक्षुषी ॥ (नारदसहिता)
प्रधानमङ्गमेवेद शास्त्रमङ्गेषु षट्स्वपि । (ब्रह्मसिद्धान्त)
यथा शिखा मयूराणा नागाना मणयो यथा ।
तद्वद्वेदाङ्गशास्त्रेषु ज्यौतिष मूर्ध्नि सस्थितम् ॥ (वेदाङ्गज्यौतिषम्)

वेदचक्षु किलेद स्मृत ज्यौतिष मुख्यता चाङ्गमध्येऽस्य तेनोच्यते ।
सयुतोपीतरै कर्णनासादिभि चक्षुषाऽङ्गेन हीनो न किंचित्करः ॥
(भास्कर)

वेदस्य चक्षु किल शास्त्रमेतत् वेदाङ्गषट्कादपि मुख्यताऽस्य ।
प्रत्यक्षत कालविधायकत्वात् लोकोपकृत्या च जगत्प्रसिद्धम् ॥

इति । अत्र—वेदो नाम कश्चन अक्षरराशि । तस्य करचरणाद्यङ्गकल्पन कथ सङ्गच्छते इत्याशङ्का स्यात् । अनाद्यन्तस्य निर्गुणस्य निराकार-

स्यापि परब्रह्मण यथावा 'ब्राह्मणोऽस्य मुखमासीत्' (आ ३-१२) इत्यादिना मुखाद्यङ्गविभाग कृत तथात्रापि अङ्गविभागो निरूपित इति तत्परिहार अनुसन्धातव्य ॥

उपकार्योपकारकत्वेनाप्यङ्गाङ्गिभावो निरूप्यते—उपकार्यो वेद उपकारक शास्त्र वेदास्तावत् श्रौतस्मार्तकर्मनिरूपणार्थं मुख्यतया प्रवृत्ता तेषु वेदेषु तत्रतत्र तत्तत्कर्मानुरूपशुभाशुभतिथिनक्षत्रमुहूर्तकाला-दयो ज्योतिश्शास्त्रविषयास्सूचिता । तथासूचितानां विषयाणां अस्मिन् शास्त्रे प्रतिपादनात् एतच्छास्त्रस्य वेदोपकारकत्वेन वेदाङ्गत्व सिद्धम् । तथासूचितशास्त्रविषयवाक्यानि वेदेषु बहून्युपलभ्यन्ते । तेषु कृष्णयजुर्वे-दीयान्येव कानिचिद्वाक्यान्यत्रोदाह्रियन्ते ॥

### सृष्टिविषय

'प्रजापतिरकामयत प्रजास्सृजेयेति' (स ३—१—१) अत्र सरी-सृपपशुपक्ष्यादिसृष्टि प्रजासृष्टिश्च प्रतिपादिता । 'एकयाऽस्तुवत प्रजा अधीयन्त' (स ४—३—१०) अत्रानुवाके सप्तर्षिपितृग्राम्यारण्य क्षुद्रैक-शफपश्वादीना पञ्चभूताना वस्वादीना च सृष्टि प्रतिपादिता । 'प्रजा-पतिरकामयत प्रजायेयेति' (स ७—१—१) अत्र ब्राह्मणादीना गवाजा-श्वादीना च सृष्टि प्रतिपादिता । 'सा पृथिव्यभवत्तत्पृथिव्यै पृथि-वित्वम्' (स ७ १-५) एतदनुवाके वसुरुद्रादित्याना पृथिव्याश्च सृष्टि प्रोक्ता 'स भूमिमसृजत । सोऽन्तारिक्षमसृजत । स दिवमसृजत । सोऽसुरानसृजत । स देवानसृजत' (ब्रा २-२-४) इत्यादिभि लोकत्र-यसृष्टिर्देवासुरादिसृष्टिश्च कथिता । 'तदतप्यत । तस्मात्तेपानाद्धूमोऽजा यत' (ब्रा २-२-९) अस्मिन्ननुवाके धूमाग्निज्योतिरार्चिर्मरीचिसमुद्रा-दीनां सृष्टिरुक्ता । 'प्रजापतिरकामयत प्रजायेयेति । स तपोतप्यत ।

सोऽन्तर्वानभवत्' (ब्रा २-३-८) अत्रानुवाके देवासुरपितृमनुष्यसृष्टिरुपपादिता ॥

'ऋचा प्राची महती दिगुच्यते। ऋग्भि पूर्वाह्णे दिवि देव ईयते। सर्वं हेद ब्रह्मणा हैव सृष्टम्' (ब्रा ३-१२-९) इत्यादिभि पूर्वादिदिशा पूर्वाह्णादिकालाना च सृष्टिर्निरूपिता। स्मृति प्रत्यक्षमैतिह्यम्' (आ १-२) अस्मिन्ननुवाके, 'स्मृत कालविशेषणम्' 'कालास्संवत्सर श्रिता' इति वाक्याभ्या, 'सर्वे निमेषा जज्ञिरे विद्युत पुरुषादधि। कला मुहूर्ता काष्ठाश्चाहोरात्राश्च सर्वश' (याज्ञिकी १) इत्यादिवाक्यैश्च त्रुटिनिमेषादि सूक्ष्मकालाना मन्वन्तरादिपरार्धपर्यन्त स्थूलकालाना च सृष्टि प्रतिपादिता। 'साकजाना सप्तथमाहुरेकजम्' (आ १-३) एतदाद्यनुवाकत्रये, 'मुख वा एतदृतूनाम्। यद्वसन्त' (ब्रा १-१-२) अत्र च ऋतुषु वसन्तादिक्रमस्य प्राथम्यादि कारण तदुत्पत्तिश्च निरूपिता। 'चन्द्रमा मनसो जात। चक्षोस्सूर्यो अजायत' (आ ३-१२) 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (या १) अनयोरनुवाकयो विराटपुरुषाग्नीन्द्रादिदेवाना ब्राह्मणादीनामहोरात्रादीना सूर्याचन्द्रमसो पृथिव्यादिलोकाना समुद्रादीना च सृष्टि निरूपिता। 'अतस्समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवस्सर्वरूपा' (या १०) इत्यादिवाक्यै समुद्रपर्वतारामनदीतटाकवापीकूपादि सृष्टि रुक्ता। 'याभिरादित्यस्तपति रश्मिभिस्ताभि पर्जन्यो वर्षति' (या ६३) इत्यादिना पर्जन्यौषध्यादिसृष्टि प्रोक्ता ॥

'प्रजापतिर्यज्ञानसृजत' (स १-६-९) 'प्रजापति प्रजा असृजत' (स २-१-१) (ब्रा २-२-७) (ब्रा ३-१-४), 'प्रजापतिर्देवासुरानसृजत' (स ३-३-७) 'ब्रह्ममुखा वै प्रजापति प्रजा असृजत' (स ५-२-७) 'यथा वै पुत्रो जात' (स ५-७-५) 'अग्निष्टोमेन वै

प्रजापति प्रजा असृजत' (स ७-१-१) 'प्रजापती रोहिण्याममिमसृजत' (ब्रा १-१-२) ' अग्निमुखा वै प्रजापति प्रजा असृजत' (ब्रा १-६-३) ' प्रजापतिराग्निमसृजत ' (ब्रा २-१-२) ' प्रजापतिरकामयतात्मन्वने जायेतेति' (ब्रा २-१-६) 'प्रजापतिरकामयत प्रजास्सृजेयेति' (ब्रा १-२-२) ' प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति' (ब्रा २-२-२) 'प्रजापतिरकामयत प्रजायेयेति' (ब्रा २-२-३,४) 'प्रजापतिरिन्द्रमसृजत' (ब्रा २-२-१०) 'प्रजापतिरकामयत बहोर्भूयात्स्यामिति' (ब्रा २-२-११) 'प्रजापति पुरुषमसृजत' (ब्रा २-३-७) 'प्रजापतिस्सोम राजानमसृजत' (ब्रा २-३-१०) 'प्रजापति पशूनसृजत' (ब्रा २-७-१४) 'प्रजापतिर्वा अकामयत' (ब्रा ३-१-५) 'प्रजापतिर्यज्ञमसृजत' (ब्रा ३-२-३) 'प्रजापतिर्देवानसृजत' (ब्रा ३-१०-९) 'यत प्रसूता जगत प्रसूती' (या १) इत्यादि बहुप्रदेशेषु सर्वेषामपि सृष्टि प्रतिपादिता ॥

### सृष्टिक्रम

'श नो मित्रश्श वरुण ' (उप १-१) 'ब्रह्मविदाप्नोति परम्' (उप २-१) 'भृगुर्वै वारुणि ' (उप ३-१) एतत्प्रश्नत्रयेऽपि—'भूभुवस्सुवरिति वा एतास्तिस्रो व्याहृतय ' 'पृथिव्यन्तरिक्ष द्यौर्दिशोऽवान्तरदिशा ' तस्माद्वा एतस्मादात्मन आकाशस्सभूत ' 'सतपोऽप्यत। सतपस्तप्त्वा । इद सर्वमसृजत'। 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति'। इत्यादि वाक्यै सर्वस्यापि प्रपञ्चस्य सृष्टिक्रम सम्यक्प्रदर्शित ॥

### प्रळयविषय

'आपो वा इदमग्रे सलिलमासीत्' (स ५-७-५, ७-१-५) 'इद वा अग्रे नैव किं च नासीत्। न द्यौरासीत् । न पृथिवी । नान्त

रिक्षम् '(ब्रा २-२-९) 'आपो वा इदमासन् सलिलमेव। स प्रजापति-रेक पुष्करपर्णे समभवत्' (आ १-२३) इत्यादिभि सृष्टे पूर्वं भूम्याकाशादिक किमपि जगन्नासीत् सर्वं जलमय तमोभूत ब्रह्मात्मकमेवासीत्। इति ज्ञायते ॥

**प्रळयक्रम**

'अन्न प्रयन्त्यभिसविशन्ति' 'प्राण प्रयन्त्यभिसविशन्ति' 'मन प्रयन्त्यभिसविशन्ति' 'विज्ञान प्रयन्त्यभिसविशन्ति' आनन्द प्रयन्त्यभिसविशन्ति'.(उपनिषत्तृतीयप्रश्न) 'पृथिव्यप्सु प्रलीयते। आपस्तेजसि प्रलीयन्ते' (सुबालोपनिषत्) इत्यादिभि सर्वाण्यपि भूतजातानि परब्रह्मणि प्रळयकाले लीनानि भवन्तीति आत्यन्तिकप्रळयश्च स्पष्ट ॥

**अथ लोकविचार**

'सप्त ते अग्ने समिधमस्सप्त जिह्वा' (स १-५-३) 'सप्त इमे लोका प्रचरन्ति' (याज्ञिकी १०) 'ओ भू' (याज्ञिकी २७) इत्यादिभि भूरादयस्सप्तोर्ध्वलोका निरूपिता ॥

'पृथिव्यामाकाश प्रतिष्ठित' (तै उ ३-९) अत्र पाताळलोका पृथिवीपुटानि' इति भास्करवचनस्य भूगोळमध्ये कक्ष्यावत् सप्तान्तराणि वर्तन्ते। त एव पाताळलोका इति व्याख्यानरीत्या सप्ताधोलोका प्रतिपादिता इति ज्ञायते ॥

'विष्णुना विधृते भूमी' (आ १-८) 'आकाशे पृथिवी प्रतिष्ठिता' (उ ३-९) इत्यादिभि भूमेर्निराधारता निरूपिता 'तादियमभवत्। तदन्तरिक्षमभवत्। तदसावभवत् (स ५-७-५) 'पृथिव्यन्तरिक्ष द्यौर्वषट्स्वाह' (स ७-३-१२) 'सा पृथिव्यभवत्। तदन्तरिक्षमभवत्। सा द्यौरभवत्) (ब्रा २-२-९) 'अम्भासि जुहोति' (ब्रा ३-८-१८)

'पृथिवी मे यच्छ'। अन्तरिक्ष मे यच्छ। दिव मे यच्छ। (ब्रा ३-१०-४) 'भूरग्नि च पृथिवीं च माच (ब्रा ३-१०-५) 'भूरिति वा अय लोक ' (उ १-५) इत्यादिभि 'भूरग्नये पृथिव्यै स्वाहा' (याज्ञिकी ३-४-५) इत्याद्यनुवाकत्रयेण च भूरादिलोकत्रय तदुत्पत्ति तद्देवता स्पष्ट निरूपिता ॥

## सूर्यचन्द्रादिप्रधान विषयनिरूपणम्

'याच्चमृत यच्च मर्त्यम्' 'सर्वा दिशो दिक्षु' 'सर्वांदिव सर्वान्देवान्दिवि' (ब्रा ३-१२-६, ७, ८) इत्येतेष्वनुवाकेषु स्त्रीपुरुषनपुसक ग्राम्यारण्यद्विपाच्चतुष्पात्पश्वादय, हिमनीहारविद्युत्स्तनयित्नु जीमूताशनिवृष्टिसूर्यचन्द्रवाय्वादय, सवत्सरर्तुमासपक्षाहोरात्रादयश्च प्रतिपादिता। 'सप्तभिर्वातैरुदीरिता' (आ १-९) अत्र सप्तवायुस्कन्धास्सूचिता ॥

'अय पुरो भुव' (स. ४-३-२) 'अय पुरो हरिकेश' (स ४-४-३) 'समीची नामासि प्राची दिक्' (स ५-५-१०) 'ता दिशोऽभवन्' (स ५-७-५) 'चतस्रो दिश' (ब्रा ३-३-८) 'अथाग्नेरष्टपुरुषस्य' (आ १-१८) 'अञ्जलिना पुरस्तादुपादधात्' (आ १-२३) 'ता पुरस्तादुपदधाति' (आ १-२४) 'नम प्राच्यै दिशे' (आ २-२०) 'चतस्रो दिश। चतस्रोऽवान्तरदिशा' (आ ३-९) 'आयु पुरस्तादाह' 'प्रजा दक्षिणत' 'प्राण पश्चात्' श्रोत्रमुत्तरत' (आ ५-४) इत्यादिभि प्राच्यादयश्चतस्र प्रधानदिश, अग्नेय्यादयश्चतस्र कोणदिश, ऊर्ध्वमधश्चेति द्वे मिळित्वा दश दिश, तत्तद्देवता तदुत्पत्त्यादयश्च निरूपिता। 'प्राचीनमुदीचीन मध्यम्' प्रतीचीन दक्षिणाऽमेध्यम्' (ब्रा ३-२-९) अनेन प्रागुत्तरादिग्भागौ कर्मसु योग्यौ, इतरौ निषिद्धावित्यर्थो लभ्यते ॥

'तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य' (स १-४-३१) (आ ३-१६) 'सूर्य आत्मा जगतस्तस्थुषश्च' (स १-४-४३,) सप्त त्वा हरितो रथे वहन्ति देव सूर्य' (स २-४-१४) 'हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन्' (स ३-४-११) 'सूर्य एकाकी चरति' (स ७-४-१७) तस्माद्यर्हि तेक्ष्णिष्ठ तपति' (ब्रा १-५-३), (आ २-१३) 'सूर्यो ज्योतिर्ज्योतिरग्नि' 'अग्नि॰ ज्योतिर्ज्योतिस्सूर्य' (ब्रा २-१-२) 'ततो वै सनक्षत्राणा प्रतिष्ठाऽभवत्' (ब्रा ३-१-६) 'उद्यन्नद्यमित्रमह' (ब्रा ३-७-६) 'येन सूर्यस्तपति तेजसेद्ध' (ब्रा ३-९-१२) योऽसौ तपन्नुदेति' (आ १-१४) 'अथादित्यस्याष्टपुरुषस्य' (आ १-१५) 'असावादित्यो ब्रह्म' (आ २-२) 'य उदगान्महतोऽर्णवात्' (आ ४-४) 'आदित्येन वाव सर्वे लोका महीयन्ते' (उ १-५) 'आदित्यो वा एष एतन्मण्डल तपति (या १४) 'आदित्यो वै तेज ओजो बलम्' (या १५) 'घृणिस्सूर्य आदित्यो न प्रभावात्यक्षरम्' (या ३७) इत्यादिभि सूर्यस्य ज्योतीरूपत्व, तेजोमयत्व, उदयास्तमयवत्त्व, परिभ्रमणवत्त्व, मध्याह्ने अतितीक्ष्णत्व, सृष्टि, स्थिति, लय, कर्तृ त्रिमूर्त्यात्मकत्व, सकलजगदात्मकपरब्रह्मस्वरूपत्व, नक्षत्रमार्ग एव सचारित्व चेत्यादय विषया प्रतिपादिता ॥

'क्वेदमभ्र निविशते' (आ १-८) अस्मिन्ननुवाके प्रश्नोत्तररूपेण अनेके विषया प्रतिपाद्यन्ते। जलपूर्णो मेघ आकाशे वर्तते। तस्य आधाराभावे कन्दुकादिवत् अध पतेत्, अत केनचिदाधारेण भवितव्यम् तादृश आधार क ? सगम्य वसन्त्यस्मिन् कालविशेषा इति सवत्सर इति व्युत्पत्त्या तेषु ऋत्वादिकालावयव विशेषेषु केन चित्कारणेन भवितव्यम् किं तादृश कारणम् ? सकलाधारभूते द्यावा-

पृथिव्यौ च कदाप्यसंश्लिष्टे अनध पतिते च तिष्ठत तथा केन विधृते? तादृङ्महात्मा क ? इत्यादय प्रश्ना ॥

'वाताद्विष्णोर्बलमाहु । अक्षराद्दीप्तिरुच्यते' (आ १-८) इत्यादिना विज्ञाते साक्षादीश्वरादपि अतिशयित प्रकाशसामर्थ्ये परिदृश्यमाने तेजोमण्डले 'विष्णुना विधृते भूमी' (आ १-८) 'स यश्चाय पुरुषे । यश्चासावादित्ये । स एक ' (उ २-८) इत्यादिना साक्षान्महाविष्णुत्वेन सूर्यं व्यपादिश्य स एव सर्वातिशायी भगवान् सूर्य शङ्कुरूपैरधोमुखैः रश्मिभि भूगोळ मेघादिक च, तादृशैरेव ऊर्ध्वमुखै किरणै दिव च धारयति । सवत्सरादित्रुटयन्तकालावयवानामप्ययमेव मुख्यकारणम् । किंच 'अग्नयो वायवश्चैव । एतदस्य परायणम्' (आ १-८) एवमेव सूर्याग्निवायुभि अन्योन्योपकार्योपकारिभावेन लोकत्रयमपि धृतम् इत्याद्युत्तर च अस्मिन्ननुवाके प्रतिपादितम्

अनेन सूर्यकिरणाना आकर्षणशक्त्या भूगोळभगोळौ कदाप्यधो न पतिष्यत सर्वदाऽन्तरिक्ष एव निराधारौ तिष्ठतश्च मेघविद्युदादयश्च सूर्याग्निवायुसवन्धविशेषादेव जायन्ते इत्यादय शास्त्रविषया प्रतिपादिता

'नवोनवो भवति जायमान ' 'यमादित्या अशुमाप्याययन्ति ' (स २-४-१४, ब्रा ३-१-२) 'चन्द्रमा नक्षत्राणामधिपति ' (स ३-४-५) 'सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्व ' (स ३-४-७) 'इत्था चन्द्रमसो गृहे' (ब्रा १-५-८) 'चन्द्रमा वै पञ्चदश । एष हि पञ्चदश्यामपक्षीयते। पञ्चदश्यामापूर्यते। चन्द्रमस एवैन तत्' (ब्रा १-५-१०) 'चन्द्रमा वा अकामयत ' (ब्रा ३-१-६) 'चन्द्रमा वै जायते पुन ' (ब्रा ३-९-५) 'आदित्योसि दिवि श्रित , चन्द्रमस प्रतिष्ठा, चन्द्रमा अस्यादित्ये श्रित , नक्षत्राणा प्रतिष्ठा, नक्षत्राणि स्थ चन्द्रमसि

श्रितानि' (ब्रा ३-११-१) 'चन्द्रमा वा अपामायतनम्' (आ १-२२) 'चन्द्रमा मनसो जात' (आ ३-१२) चन्द्रमसीवाव सर्वाणि ज्योतीषि महीयन्ते' (उ १-५) ॥

इत्यादिभि चन्द्रो नक्षत्राधिपति कालपुरुषमनोरूप जलमय सूर्यकिरणसबन्धात् अस्य शुक्लत्व रश्मयश्च जायन्ते चन्द्रगुणास्सर्वेऽपि सूर्याधीना, स च वर्धमान क्षीयमाणश्च भवति, अमावास्यायामस्तमित-श्शुक्लप्रतिपदि पुनर्जायते, एव प्रतिमास सभवात् पुन पुन जायते, अमावास्याया सुतरा क्षीण पूर्णिमाया सुतरा पूर्ण मध्ये तिथिभेदेन कलाह्रासवृद्धी भवत इत्यादयश्चन्द्रविषयास्सर्वेऽपि प्रतिपादिता ॥

'सुवर्भानुरासुरस्सूर्य तमसाऽविध्यत् (स २-१-२) अनेन ग्रह-णविषयस्सूचित । 'मारुतमसि मरुतामोज' (स २-४-७) इत्याद्यनु-वाकचतुष्टये पर्जन्य मेघ विद्युत्स्तनयित्न्वादय, वृष्टिलक्षणम्, पुरोवातो वृष्टिजनक, पश्चाद्वातो वृष्टिप्रतिबन्धक इत्यादय प्रतिपादिता 'शतायु पुरुष (स २-३-११) अत्र पूर्णायुष शतत्वोक्त्या 'उत्तर-आयुषि लोम छिंदीत' (ब्रा १-३-१०) इत्यत्र पञ्चाशदुत्तरमुत्त-राथु, अथवा परमायुषस्तृतीयोभाग—षट्षष्टिभ्यो वर्षेभ्य अष्टाभ्यो मासेभ्यश्च उत्तरमुत्तरायु इत्युक्तत्वात् षट्षष्टिर्मध्यम स्मृतम्' इति मध्यमायुश्च प्रतिपादितम् 'शतमान भवति' (स २-३-११) अत्र गुञ्जाख्य मान प्रतिपादितम् अनेन गुञ्जादीनि सर्वाण्यपि मानानि सूचितानि स्यु

(सशेषम्)

सि. नरहरिर्ज्यौतिषिक.

॥ श्रीरस्तु ॥

## महिशूरदेशाभ्युदयो नाम

### चम्पूप्रबन्धः

महादेवोत्सङ्गक्षितिधरतटोत्खातरसिक
    विहारं कुर्वाणो मुनिजनमनःकाननभुवि।
प्रभूतप्रत्यूहद्रुमसमुदयोन्मूलनचणः
    करीन्द्रः कल्याणं कलयतु पुराणश्शुभगुणः ॥ १

नानाजन्मात्तपूजोत्तमफलसुगमे यत्प्रसादाम्बुराशा-
    वेकं प्राप्यापि बिन्दुं जडमतिरमिता प्रौढतामेति सद्यः ।
भक्ताभीष्टप्रदात्री परिलसितशरच्चन्द्रिकाचारुगात्री
    सा वाग्देवी ममास्ये सततमिह नरीनृत्यतां प्रोल्लसन्ती ॥ २

यस्यादेशेन विद्वत्कविविततिसमुल्लासबद्धादरस्य
    ग्रन्थं निर्मातुमेतं वयमतिकुतुकाः स्पर्धयोऽद्योद्यतास्स्म ।
श्रीमत्कर्णाटदेशक्षितिवलयपयोराशिसंपूर्णचन्द्रः
    श्रीमान् कृष्णक्षितीन्द्रः चिरमवतु भुवं सोऽयमानन्दसान्द्रः ॥

रम्यैर्दिव्यैर्विचित्रवस्तुविभवैस्तैस्तैः प्रजारञ्जनैः
    भूयोभिश्चरितैर्निदर्शनतया सर्वत्र सश्लाघिते ।
देशेऽस्मिन् महिशूरनाम्नि महिते राजन्ति यास्संपदः
    ता एवाद्य निरूपयामि वचसा चम्पूप्रबन्धात्मना ॥ ४

जिष्णुर्भास्वत्सुधर्मं विबुधवरनुत नाकलोक यथेन्द्र
जिष्णुर्भास्वत्सुधर्म विबुधवरनुत कृष्णराजक्षितीन्द्र ।
लक्ष्मीलीलानिवेश महितमवति य श्रीमहीशूरदेश
तत्सपत्ति प्रभूता क्नु भुवननुता क्वेयमल्पा मतिर्मे ॥ ५

तथाप्यत्रेदानीं मम मतिरिय धावति मुहु
सुसमानस्पर्धाकलितपरमोत्साहभरिता ।
महालज्जाक्रान्ताऽप्यपरिमितरागोदितधृति
नवोढा द्रष्टुं स्व तरुणरमण गच्छति न किम् ॥ ६

निन्दन्तु वा दोषगवेषणेन नन्दन्तु वा मुख्यगुणग्रहेण ।
नेद मदीये हृदि निक्षिपामि सारान्वित चेत्स्वयमेव भाति ॥ ७

उद्योगिन पुरुषसिहमुपैति लक्ष्मी-
रित्युक्तमेनमनुचिन्त्य सुभाषितार्थम् ।
उद्योगमत्र कलये दृढमात्मशक्त्या
सिद्धि कथ नु न भवेत्सदनुग्रहेण ॥ ८

नद्यावृत कञ्चन चोळदेशमध्यस्थित भासुरमग्रहारम् ।
गोविन्दसूरिप्रथिताभिधान कश्चिद्द्विपश्चिन्मणिरध्यवात्सीत् ॥९

स किल सकलशास्त्रपारावारपारीण सरसतरसाहितीरसमाधुर्य-धुर्यवाग्विलासविलसितसुललितकविताधुरीण. सन्ततनियमनिर्वर्तितपरम-नदींजलावगाहनपावनभासुराङ्ग , भूसुरोचितनित्यकर्मानुष्ठाननिष्ठ , चन्द्र-शेखरचरणारविन्दयुगळीपरिचरणानन्दतुन्दिलान्तरङ्ग अनवरत शिष्या-नध्यापयन्नासीत् ॥

अथैवगते महति काले महेश्वरानुग्रहसजातापरिमितपुत्रसपत्ति

महादारिद्र्यसागरनिमग्न कुटुम्बभरणासमर्थश्चिन्ताकुलितो मनस्येवमचिन्तयत् ॥

श्रीमानाश्रयितव्य एव नृपतिर्विद्वज्जनानन्दन
देशस्तादृगुदारभूपलसितो गन्तव्य एव द्रुतम् ।
कर्तव्य च बहुश्रुतैर्बुधवरैस्साक सदा भाषण
ज्ञातव्या बहवो निगूढविषया द्रष्टव्यमत्यद्भुतम् ॥ १०

अतो देशाटनमेव कर्तव्यम् । देशाटनमन्तरा न किंचदपि सुख सिध्यति। देशानटित्वा तत्र तत्र विद्वत्पारिषदि निज वैदुष्य प्रदर्श्य प्रभूत धनकनकवसनादिकमानेतव्यमिति ॥

एव विचिन्त्य तत प्रस्थाय तास्तान् प्रख्यातान् देशान् उपेत्य तत्रतत्र कानिचिद्दिनान्युषित्वा तत्रत्यानशेषान् विशेषान् परिशील्य कुतोऽपि मनस्तृप्तिमलभमान तत प्रस्थित भूसुरविसरपरिलसित सन्निहित कंचिद्ग्राममभ्येत्य तत्र निर्वर्तितनित्यकर्मानुष्ठान आकलितपरमेश्वराराधनविधान कृतभोजन पुनरेवमचिन्तयत् ॥

एतावन्ति दिनान्यहं जनपदास्तास्तानटित्वा बहू-
नद्यैवात्र समागतोऽस्मि मनसस्तृप्तिस्तु मे नाभवत् ।
सारज्ञो नच वीक्षितो नरपति कश्चिद्द्विपश्चित्प्रिय
किं कुर्या न किमप्युपार्जितमहो देशाटन मे वृथा ॥ ११

इत क्वा गन्तव्य मया? क्व मे धनार्जन भविष्यति? कोवा महाराजो मम वैदुष्य परिशील्य मा विशेषेण समानयिष्यति? कदावा पत्नीं पुत्रांश्चैहिकसुखसाधनेन धनेन परितोषयिष्यामि? इति बहुधा परिचिन्त्य तदनु सपदि दैवयोगेन सजातस्मृति प्रमुदितमना अहो! दिष्ट्या स्मृतिपथमधिगतामिदानीम्—

यस्मिन् सन्ति बुधोत्तमास्सकलसच्छास्त्रार्थपारगता
दूरे यत्परित कवेरतनया पुण्या नदी भासते ।
श्रीचामक्षितिपात्मजो यदवति श्रीकृष्णभूमीपति
मद्ग्रामस्ति महीसुराभिधमतिख्यात महापत्तनम् ॥ १२

इतस्त्रिंशतो वत्सरेभ्य प्राक् सकृत् तत्पुरमधिष्ठित मयाऽल्पमेव कालम् अद्य किल तद्देशो महता विविधसम्पदभ्युदयेन महतीं कीर्तिमवाप्य सकलदेशानामादर्श इव विशेषत परिशोभत इति श्रूयते । ततस्स एव देशोऽद्य मया गन्तव्य कर्तव्य च तन्महाप्रभोर्दर्शनमित्यालोच्य सद्यस्तत प्रस्थाय तत्रतत्रावतीर्य एकैक दिन स्थित्वा नित्यकर्माणि निरन्तराय निर्वर्त्य निरन्तरप्रयाण क्रमेण जननयनकल्याण कल्याणनगरमभ्येत्य तत्र त्रिचतुराणि दिनान्युषित्वा, द्रष्टव्यान्यखिलानि दृष्ट्वा प्रष्टव्यानि पृष्ट्वा श्रोतव्यानि श्रुत्वा चित्रीयमाणचित्तस्तत प्रयाय श्रीरङ्गपत्तनमुपेत्य भगवती कावेरीं नत्वा तस्या स्नात्वा सानन्द सन्ध्यावन्दनादिक कृत्वा भक्तजनाभीष्टदायकस्य सकलजगन्नियामकस्य भगवतश्श्रीरङ्गनायकस्यालय गत्वा त प्रदक्षिणीकृत्य साष्टाङ्गमभिवन्द्य भक्तिविशेषेणैवमस्तौषीत्—

श्रीमद्भोगीन्द्रभोगे सुमहति चतुर प्रक्षिपन् बाहुदण्डान्
नित्यानन्दस्वरूप स्वपिषि ननु विभो प्राप्तनिश्चिन्तभाव ।
कुक्षौ लोकान् समस्तानपि निहितवत ते कथ नास्ति चिन्ता
यद्वा सङ्कल्पमात्रप्रभवदखिलतद्रक्षणादिक्रियोऽसि ॥ १४

आसन्नप्रवहत्कवेरतनयाकल्लोलमालाञ्चित
प्रोद्यच्छीतलमन्दनिर्मलमरुत्ससेवित श्रीतनो ।
श्रुत्यन्तप्रतिपाद्यमानमहिमन् कारुण्यवारानिधे
विश्वात्मन् भगवन् नमोस्तु भवते श्रीरङ्गनाथ प्रभो ॥ १५

वन्दारुजनसन्दोहवाञ्छितार्थप्रदायक ।
पाहिमामिन्दिरानाथ योगिराड्वृन्दवन्दित ॥ १६

एवं संस्तुत्य तत्प्रसाद समोद स्वीकृत्य यावन्महाद्वारमागच्छत्, तावदेव चिरकालोपात्तपरिचय महीशूरनगरनिवास श्रीनिवासनामा कवि दैवयोगादध्वनि मिळितो दृग्गोचरोऽभूत् । त सुहृद दृष्ट्वा तुष्ट्वा कुशल च पृष्ट्वा तेन च कृतकुशलप्रश्न किंचित्काल तेन सल्लपन् अयिमित्रमणे! त्व चिराद्दृष्टोसि मया, अद्य ते दर्शनेन महान् समोदस्सपद्यते ममेति नितान्त अभिनन्द्य स्व वृत्तान्तमखिल तस्मै निवेद्य तेन साक द्वित्राणि पदानि गत्वा तत्रैव परिदृश्यमान सूचितमुम्मडि श्रीकृष्णराजमहाप्रभुजननस्थान स्मारितपुरातनमहिशूरराज्यसविधान भवन, ततोऽनतिदूरे पार्श्ववर्तिनि कावेर्या विशाले कूले विराजमान आस्तिकजनस्नानपानवसनधावनानुकूल नवीनविधान महासोपानवितान चावलोक्य, ततश्च किंचिद्दूर गत्वा तत्र पथिकजनावतरणानुकूल श्रीचामराजेन्द्रभूपालस्मारक सुन्दर कल्याणमन्दिर च दृष्ट्वाऽभिनन्दन् अमन्दमानन्दमनुभूय, ततश्च तेनैव श्रीनिवासकविना प्रस्थाय कावेरीमहाप्रवाहाभिराम विख्यातगुणग्राम कन्नबाडिनामक ग्राम गत्वा तत्रत्य महाविभव दर्शदर्श अमेय विस्मय प्रपद्य तत्र महासागरायमाणा कावेरीमेवमस्तौत्—

श्रीसह्याद्रिप्रभूते धुनि निखिलजगत्पावनि त्वत्प्रभाव
वक्तु को वा समर्थो भवति जगति नन्वम्ब कावेरि देवि ।
उद्घोष कस्तवैष द्रुतगतिरिह ते कोऽयमुद्यत्प्रवाह
कस्तोयाडम्बरोऽसौ तव भगवति कश्चैष गम्भीरभाव ॥१७

पतिमम्भोनिधिमेव ध्यायन्ती रहसा सरन्ती त्वम् ।
तादात्म्यमिहैवागास्त्वयि भाति भ्रमरकीटकन्याय ॥ १८

(सशेष)

॥ श्री ॥

## श्रीमन्महाराज संस्कृतमहापाठशालानुबन्धिवृत्तान्त

### विद्यार्थिपारितोषिकसभा

श्रीमन्महाराज श्रीकृष्णराजसार्वभौम पट्टाभिषेकमहोत्सवदिवस भूताया क्रोधनसंवत्सर माघशुक्लसप्तम्या (२०-१-२६) यथापूर्व यथाक्रमच निर्वर्तिताया श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्येत्याद्यनन्तबिरुद समलङ्कृतै श्रीलक्ष्मीहयवदन पादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकैरधिष्ठिताया वार्षिकविद्यार्थिपारितोषिक सभाया वृत्तान्त॰—

राजधानी मधिवसाद्भि लौकिकवैदिकमहाशयै सकल विद्याशास्त्रीय विद्यार्थिभि सपरिवारैस्सभाध्यक्षैश्च विभूषिताया सभायामध्यक्षशासनानुरोधेन काश्चन मङ्गलश्लोकान् कर्णाटकसंस्कृतभाषामयान् अगायन् सकेचन बालका ॥

तत पाठशालाध्यक्षा तादृशशालानुबन्धिन क्रोधनवत्सरोदन्तान् अभ्युदयप्रकराश्च संक्षिप्यावेदयामासु ॥

ततश्च सभाध्यक्षा परीक्षायामुत्तीर्णाना विद्यार्थिना अनर्घाशीर्वादपूर्वक पुस्तकरूपाणि बहुमानान्यन्वगृह्णन् ॥

तत पर महीशूरविश्वविद्यानिलयसभाया रिजिस्ट्रार्, पदमलङ्कुर्वाणा वि सुब्रह्मण्य अय्यर् महाशया संस्कृतविद्यामधिकृत्य सकोचविकास निमित्तोपपादनप्रकारान् सम्यक् कर्णाटभाषामयोपन्यासमुखेन विशदीकृत्य सकलजनमनास्युल्लासयामासु ॥

-अथ च सभाध्यक्षा सुबहूनर्थानुपदिदिशु । अयमत्र साराश —

श्रुतिमुखविद्याभरण जयति तमा सकलजगदलङ्करणम् ।
निखिलजनतमोहरण तद्धाम हयानन भजे शरणम् ॥

प्रख्यातमेवैतत्—यत्परिचितगीर्वाणभाषा तादृशभाषामयशास्त्रदर्शितेन पथा सचरमाणा ऐहिक पारत्रिक च पर श्रेय प्राप्नुवन्तीति । गीर्वाणवाण्याश्चास्यास्संस्कृतभाषेति नामधेय सार्वजनीनम् । इदमस्यास्सूचयत्यनितरभाषासाधारण साम्राज्यम् ॥

सर्वा अपि भाषा व्याकरणसस्कारसस्कृता इति कथमियमेव सस्कृतपदमलङ्कुरते? सत्यम्—सस्करण चैतदेव देवभाषाया यत् स्वनिकर्ष गुरूत्कर्ष च अनुसन्धाय गुरुभक्तिशुश्रूषादिपूर्वकाध्ययनादेव स्वप्रकाशितोपायमुखेन परमश्रेय प्रापणमध्येतृणाम् । सस्कृतभाषामयेषु महाभारतारामायणदिष्वेतद्भाषोपज्ञानि मातापितृगुरुभक्त्यारोग्यद्वन्द्वसहनमनस्तुष्टिप्रमुखानि प्रचुरतराण्यनुभवप्रासादमध्यरोपितानि । यथा— महातपस्विनोऽपि कौशिकात् मातापितृशुश्रूषैकदीक्षितस्य धर्मव्याधस्य समधिको महिमा, सकलजनक्षेमङ्कर हि श्रीरामचन्द्रस्य दशरथाज्ञापरिपालनम्, इत्यादीनि ॥

इदानीन्तनाश्चापरिचितसस्कृतभाषा केचिन्महाभागा पूर्वदिने ओदनफलाद्यभ्यवहरणेन तृप्तिसुखमनुभवन्त परदिने ओदनफलादिदर्शनसमनन्तरमेव निश्यङ्क तद्भक्षणे प्रयतमाना अपि अनुमानापरपर्यायात् युक्तितोऽर्थनिर्णय सशयपदमाकलयन्त आत्मनो मातु पितुश्च मातृभाव पितृभाव तयोश्शुश्रूषया परम श्रेयश्चानध्यक्षयन्त स्तदुपदेशकेषु पुरुषेष्वाप्तभावमधरीकुर्वन्त श्रीमद्रामायणोपदर्शित जाबालिसिद्धान्तमेवावलम्भन्ते इति महदिद चिन्तास्थानम् । तदिद सत्सम्प्रदायविद्या-

भ्यासैनैव सुदूरपरिहरणीयमित्यत एव सम्प्रदायससिद्धविद्याभ्यास अव-श्यमुपादेय ॥

अधुनातनाश्च केचित्सस्कृतभाषाध्यापयितारोऽपि वेतनादिलाभ मात्रपरा ताच्छिष्या अपि गुरूस्तथैवाभिसन्दधाना वात्सल्यभक्त्यादि-वैदेशिका अध्ययनसमनन्तरमेव मिथो विदूरा "एक पापानि कुरुते" इति न्यायेन सर्वेषामपि वचनीयतामापादयन्ति । नैव खल्ववकाश लभते तादृशी वचनीयताऽस्मत्पाठशालानुबन्धिषूपाध्यायेष्वन्तेवसत्स्वपि । तथापीतो भूय ये पितृभक्ति तदाज्ञानुपालन गुरुभक्त्यादिगुणगरिष्ठतया कठोपनिषत्प्रसिद्ध नचिकेतसमनुकुर्यु श्शिष्या , तद्गुरवश्च स्वोपदिष्टार्थस्य शिष्याणा सुष्ठुपरिज्ञानधारणादिकमेवात्मीय परमपुरुषार्थमन्यमानेष्वग्रग-ण्यतया तैत्रव प्रख्यात धर्मदैवत प्रतिबिम्बयेयु ते चिराननुसहितगुरूपदि-ष्टार्थाअपि निमेषमात्रेण तदुपदिष्टार्थान् स्मृतिपथमाकर्षन्त सकलजनम-नोहारिणीं वाणीमभिभाषमाणा न चिरादेव अमन्दमानन्दमनुभवेयु ॥

सस्कृतभाषाभिवृद्धिसमयसमुपजातचातुरीधुरीणा गौतमापस्त-म्यादिभिर्महर्षिभिरुपदर्शिता दिशमवलम्बमाना प्राञ्चश्शाश्वतिक शरी-रारोग्यभाग्य सुदीर्घमायुरप्यलभन्त । अद्यतनाश्च पुरुषा विचित्रतमासु भोजनशालासु विस्मयकरस्वाभीप्सिततत्तत्पदार्थरसास्वादनव्यग्रा प्रचुर-निपुणराजकीयवैद्यशालासूत्तममौषधमासेवमाना अपि न नादृश शरी-रारोग्य न वा सुदीर्घमायुरवाप्नुवन्तीति सर्वजनविदित विचारस्थानमपि नियमावलम्बमात्रेण सुपरिहरमेव ॥

अपिचाद्यत्वे मानवा "शीतोष्णसुखदु खेषु तथा मानावमा-नयो" इति पद्य श्रोतुमपि न क्षमन्ते । मनुयाज्ञवल्क्यादिभिर्जीवनो-पायेषु परिगणितेषु तृप्तिर्या पुरातनान्पुरुषान् स्वायत्तीचकार, सेयमाधु-निकाना दृष्टिश्रुतिपथमपि नारोहतीत्यतिविशङ्कट सकटमपि क्रमेणा-भ्यासबलेन शक्यमेव दूरीकर्तुम् ॥

त एते मातृपितृगुरुभक्त्यादयो गुणा यमवलम्ब्य प्रकाशन्ते सोऽय श्रीकृष्णराजसार्वभौमस्संस्कृतविद्यामनुदिनमभिवर्धयन् " यथा राजा तथा प्रजा " इतिन्याय च निदर्शयन् सह प्रजाभिस्समेधता सन्ततमिति श्रीहयवदन लक्ष्मीनारायणचरणारविन्दयो अभ्यर्थनाकुसुमाञ्जलिमर्पयत्यनुकलमय जन इति शम् ॥

तत पर आस्थानविद्वास श्री ॥ वासुदेवाचार्यमहाभागा भगवद्विषयकेण सङ्गीतकेन सर्वान् सभास्तारानानन्दयामासु । ते च सभास्तारा साध्यक्षा श्रीमतो महाराजस्य श्रीकृष्णराज्महीधरमणे सपरिवारस्यायुरारोग्यैश्वर्यादिक निरतिशयमाशसमाना भगवन्त प्रार्थयासुरिति ॥

कल्याणम् ॥



॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

## विषयसूचना

---





## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम –संस्कृतविद्याभिमानिन पुरुषप्रवरा य्र कचन विषयमाधिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकर्मित कस्याप्यनुद्वेगकर अचर्चितपूर्व कालदेशदशानुगुण प्रपञ्चोपकारकर धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकर प्रस्पष्टमुखविलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त , तेभ्यो महद्भ्य समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्या तमुपन्यास पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तु जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृश सवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

संपादकस्य

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक अग्रिम मूल्य सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२ विद्यार्थिना पुन एकरूप्यकम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्ष , मैसुरु.

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा"

(ईशोपनिषत्)

सपुट-२] जुलै १९२६ [सञ्चिका ३

मानातीतप्रथितविभवां मङ्गलं मङ्गलाना
वक्ष पीठीं मधुविजयिनो भूषयन्तीं स्वकान्त्या ।
प्रत्यक्षानुश्रविकमाहिमप्रार्थिनीना प्रजाना
श्रेयोमूर्तिं श्रियमशरणस्त्वा शरण्या प्रपद्ये ॥

## तत्त्वविचार

क्यांट्नाम्ना विदुषा कृतः

जर्मनीदेशे कोनिग्स्बर्ग्पत्तने १७२४ तमे क्रिस्तवत्सरे जात क्याट्नामा जर्मनिदेशीय तत्रैव पत्तने विश्वविद्यालयेऽध्यात्मशास्त्रमधीत्य १७५५ तमे वत्सरे तत्रैवोपाध्यायपदमारुह्य प्रमाणपरीक्षानामकमेक ग्रन्थ विरचय्य प्राकाशयत् । तेन विरचितेषु ग्रन्थेष्वनेकेषु प्रमाणपरीक्षा यूरपमरिकदेशेषु परा ख्यातिमुपगम्य विद्वद्भिरादृता समभवत् ।

### सिद्धान्त

अथ तावत्तद्ग्रन्थस्य साराश —कोऽय सिद्धान्तो नाम ? कथ वा सिद्धान्तार्थास्समुपलब्धा ? नहि घट पट इतिवृत् सिद्धान्तार्थाश्चक्षुषा गृह्यन्ते !

स्वाभाविकार्थवादोऽपूर्वार्थवादश्चेति सिद्धान्तो द्विधा वर्तते । "भास्वानुदेति, भास्वानस्तमेति" इत्यादयोऽर्था सर्वेषामनुभववेद्या-स्स्वाभाविका एव । "भूरिय ग्रहेष्वन्यतमा' इत्यर्थोऽपूर्वार्थ । अत्रहि सोमसौम्याङ्गारकबृहस्पतिशुक्रशनिषु प्रसिद्ध ग्रहत्व भूम्या-मप्रतीत कारणान्तरेणानुमित भवति । तथाचाय सिद्धान्तोऽपूर्वार्थ-वाद ।

अपूर्वार्थवादेऽपि किंचित्तत्कालाबाधित किंचिच्च सर्वदाऽबा-धित दृश्यते । यथा "जलमुष्णम्" इति ज्ञान तत्कालेऽबाधितम् । परेद्युश्शीतमेव तत् ज्ञायते । "उष्णेन वस्तु विकसति" "शीतेन वस्तु सकुचति" इति ज्ञान तु सर्वदाप्यबाधित समुपलभ्यते ।

तदित्थमबाधितत्वप्रतीति कथमुपपद्यते ? उष्णेन वस्तूना विकास शीतेन च सकोचस्सर्वत्र सर्वदा न केनाप्यवगतौ, तथाऽपि स सिद्धान्तार्थस्सर्वदाप्यबाधित इति विद्वद्भिरभ्युपगतो वर्तते । नायमर्थ इन्द्रियैर्ग्रहीतु शक्यते । अतोऽनुमानप्रमाणेनैवायमर्थस्समुपलब्ध इति बाढ वक्तव्यम् ।

ये तावदेतादृशास्सिद्धान्तार्था बहवो गणितशास्त्रे ज्यौतिष-सिद्धान्ते भौतिकशास्त्र अध्यात्मशास्त्रे च दृश्यन्ते तेषामपि सर्वेषा प्रमाणमनुमानमेवेति वक्तव्यम् । अनुमान च व्याप्तिज्ञानाधीनमिति सर्व-सम्मतम् । व्याप्तिज्ञानस्य च साध्येन सह हेतो भूयोदर्शन मानसश्च परामर्श कारणमिति च निर्विवादम् ।

उष्णेन वस्तुनो विकास शीतेन सकोच इत्यत्र उष्ण वस्तु शीत वृद्धिर्ह्रासश्च विषया इन्द्रियैर्गृह्यन्ते। उष्णस्य वस्तुविकासस्य च शीतस्य वस्तुह्रासस्य च परस्पर कार्यकारणभावस्तु मनसाऽवगम्यते। इत्थमेव सर्वेषु सिद्धान्तार्थेषु ये विषयास्सकलिता वर्तन्ते तेषा ग्रहण क्वचिदशे इन्द्रियकृत क्वचिच्च मानसकृतमिति स्पष्ट ज्ञायते। तथाच इन्द्रियैर्वस्तूनि गृह्यन्ते मनसा तु विचार्यन्ते इत्युक्त भवति।

## देशकालौ

वस्तूनि च चक्षुरादीन्द्रियै कथ गृह्यन्ते कथ वा मनसा विचार्यन्ते इति परीक्षितव्यम्। वस्तु यथावर्तते तथैव तच्चक्षुषा गृह्यते इत्याबालवृद्ध प्रतीतिरस्ति। कृते तु विचारे न वस्तु यथावस्थित गृह्यते इति ज्ञायते।

यदा तु चक्षुर्वस्तु गृह्णाति तदा वस्तुनि देशमाधाय गृह्णाति। न केवल देशमेव किन्तु कालमप्याधाय गृह्णाति। अत्र घट तत्र पट इदानीं घट तदानीं पट इति। देशकालसबन्ध विना न चक्षुर्वस्तु ग्रहीतु शक्नोति। न च तत्त्वतो वस्तुनि देशकालौ दृश्येते कुतस्तर्हि देश कालश्च समागतो वस्तुनि सबद्धो दृश्यते? न देशकालौ बहि॰ कुत्रापि दृश्येते। अतस्तौ मनोगतौ वस्तुन्यारोप्येते इति वक्तव्यम्। तथा च देशकालौ॰ आन्तरावपि वस्तुसगताविव दृश्येते इति स्पष्ट भवति। देशकालौ च न बाह्यौ पदार्थौ। पर तु आन्तरावेवेत्यत्र कानिचित्प्रमाणानि समुपलभ्यन्ते—दूरान्तिकबुद्धिशून्योऽपि शिशुरनुकूलानुभवजनक वस्तु ग्रहीतु हस्तौ प्रसारयति। प्रतिकूलानुभवजनकाद्वस्तुनो विनिवर्तते। अतस्तस्यापि देशस्य स्वान्तर्गतत्वेन तज्ज्ञानमान्तर सहजसिद्धमिति वक्तु शक्यते। इत्थमेव इदमित पूर्व तदत

परमिति कालप्रतीतिश्शिशोरप्यस्तीति कालोऽप्यान्तर एव । न तु बाह्य पदार्थ इति विज्ञायते ।

इदंचान्यत्प्रमाणमत्र विषये वर्तते । वस्तूनि कदाचित्कानिचिद्-वभासन्ते न सर्वदा सर्वाणि । देशकालौ तु सर्वदा सर्वत्र भासेते । न हि देशकालसंबन्धविनाकृत ज्ञान साध्यम् । अतश्च मन इव देशकालावप्यान्तराविति स्पष्टम् ।

देशकालावान्तरौ पदार्थाविति गणितशास्त्राच्च निस्सन्देहं ज्ञायते । अङ्कगणित हि केवल कालमानमेव । सख्या खलु क्षणपरम्परैव । क्षेत्रगणित तु देशमानमेव । नचाङ्कगणितक्षेत्रगणिते इव सर्वस्यापि जनस्यावश्यकार्थक्रियाकारिणावन्यौ विषयौ स्त । त्रिस्त्रीणि नव सपद्यन्ते इति समत्रिभुजत्रिकोणे त्रयोऽपि कोणास्समा एवेति चाबालवृद्ध सर्वोऽपि जानाति । तज्ज्ञान केवल तर्केणैवोपगन्तव्यम् । नह्येकादिसख्या नापि चतुरश्रादिक्षेत्र बाह्य वस्तु चक्षुरादीन्द्रियग्राह्य वर्तते । ये पुनरेकादिसख्यालेखा लिख्यन्ते, यानि च चतुरश्रादिक्षेत्राणि भूतले पत्रे वा क्रियन्ते तानि कृत्रिमाणि मनोगतकालदेशयोस्सज्ञा एव न तु परमार्था यथा लिप्यक्षराणि शब्दरूपाणा कृत्रिमास्सज्ञा । यथा वा भूचित्रेषु रेखासन्निवेशा वननदीपर्वतादीना सज्ञा कृता वर्तन्ते तथैवाङ्का त्रिकोणादिरेखाविन्यासाश्च कृत्रिमास्सज्ञा एवेति निस्सशय ज्ञायते । तथाच देश कालश्च केवल मनोगतावेव बाह्ये वस्तुनि सबद्धौ भात इति स्पष्टम् ।

## गुणक्रियादि

एव क्रियाकारकसबद्धवाक्यार्थज्ञाने भासमाना गुणा क्रिया सबन्धाश्च मनोगता एव बाह्यवस्तुसगता इव दृश्यन्ते । दूरल पर्वतो

नीलो ह्रस्वश्च भाति । समीपे तु न नैल्य नापि ह्रस्वता परिदृश्यते । ऋजुरपि दण्डो जले वक्र इव दृश्यते । प्रफुल्लमल्लीकुसुमभासमाने लताकुञ्जे समानमपि गन्ध केचिदुद्वेगकर मन्यन्ते अपरेच सुखकरम् । निमीलितयोर्नेत्रयो पक्ष्मभ्या परिपीडितयोर्विविधानि रूपाण्यन्तरेव गोचरीक्रियन्ते । हस्ततलाभ्या कर्णशष्कुल्यो दृढ पिहितयोस्सतो-रसन्नपि शब्दश्श्रूयते । एकस्योष्ण जलमपरस्य कदुष्णमिव भाति । अतिमधुराऽपि शर्करा केश्चिदल्पमधुरेवास्वाद्यते । यद्देवदत्तस्य कठिनस्पर्शं धरातल तन्मृद्वी शय्यैव कृष्णदत्तस्य भाति । अतो रूपरसा-दयो गुणा न वस्तुनिष्ठा प्रत्युत मानसा एव वस्तुसगता इव इति वक्तु समुचितम् । उत्पत्तिक्षणे घटादिषु वस्तुषु रूपरसादयो गुणा न सन्ति द्वितीयक्षणे सभवन्तीति तार्किका वदन्ति । तार्किका ह्यसत-स्सज्जायत इति सिद्धान्तमभ्युपगच्छन्ति । पाश्चात्यास्तु विद्वासोऽसत-स्सदुत्पत्तिं नाङ्गीकुर्वन्ति । तद्धि भौतिकसिद्धान्तविरुद्धम् । न किमपि नव वस्तु स्रष्टु ध्वसयितु वा शक्यम् । वस्तूनि हि प्रतिक्षण भिद्यमा-नानि रूपान्तरमापद्यन्ते । नाविकारि किमप्यस्मिन् जगति वर्तते इति भौतिकशास्त्रसिद्धान्त । सिद्धान्तोऽय वेदान्तिना सिद्धान्त बाढ सवदति, वेदान्तिनो हि "नासतो विद्यते भावो नाभावो विद्यते सत " इति व्याचक्षते तथाच यद्युत्पत्तिक्षणे घटादिषु वस्तुषु रूपरसादयो गुणा नोपलभ्यन्ते तर्हि ते द्वितीयादिक्षणेष्वपि नोपलभ्येरन् । द्वितीया-दिक्षणेषु घटादिसगता इवोपलभ्यमानास्ते गुणा न घटादिनिष्ठा प्रत्युत मानसा एव तथा विषयीक्रियन्त इति बाढ वक्तु शक्यते ।

क्रियाऽपि न वस्तुगता । यद्वस्तु स्वदेश विहायान्यदेशमाक्राम-दिव दृश्यते तत्र न क्रिया किंतु सयोगविभागरूपौ गुणावेव । अव-काशो हि घटादिभि स्थूलवस्तुभि जलेन वायुना वा परिपूर्णो वर्तते ।

तथाच यद्येकश्चलिष्यति तदा तस्यावकाशो नास्त्येव। सर्वस्यापि जलाद्यनाक्रान्तस्य देशस्य वायुनाऽऽक्रान्तत्वाच्चलनं न कथंचित्संभवितुमर्हति। यदा वायोः स्वदेशाद्वियोगस्तदा तद्देशसंयोगोऽन्यस्य संभाव्यत इति चलनं वियोगसंयोगरूपमेव। अतश्च न क्रिया कुत्रापि संभावयितुं शक्यते।

एवं वस्तुषु किंचित्कारणमन्यत्कार्यमिति कार्यकारणभावं जना वदन्ति। स कार्यकारणभावो न वस्तुनिष्ठः प्रत्युत मानस एव। पूर्वक्षणे मृत् उत्तरक्षणे दण्डेन चक्रे भ्रमवति घटरूपमापन्नेति पूर्वक्षणस्थायिन्या मृदः कारणत्वमुत्तरक्षणनिष्पन्नस्य घटस्य कार्यत्वमिति विद्वांसो वदन्ति। अत्र पूर्वक्षणोत्तरक्षणौ मानसौ प्रत्ययौ इति पूर्वमेवोक्तौ। पूर्वक्षणवृत्तित्वरूपं कारणत्वमुत्तरक्षणवृत्तित्वरूपं कार्यत्वं तथैव मानसे एव। न तत्र कार्यकारणभावरूपस्संबन्धः साक्षात्क्रियते।

तदित्थं गुणः क्रिया संबन्धः प्रकार इति चतुर्धा मानसा एव भावाः पदार्थनिष्ठा इव बहिर्दृश्यन्ते। अस्यार्थस्य स्फुटं प्रतिपादनार्थं क्याट्नाम्ना विदुषा द्वादशोदाहरणानि दत्तानि। तानीमानि—

(१) सर्वे मनुष्या मरणधर्माणः

(२) केचिज्जना विद्वांसः

(३) भास्कराचार्यो गणितकोविदः

अत्र त्रिषूदाहरणेषु सामस्त्यकाचित्कत्वैकत्वरूपः परिमाणं गुणः मनोगत एव वस्तुसंगत इव दृश्यते। इन्द्रियसाक्षात्कारो महत्त्वमपेक्षत इति परमाणुसाक्षात्कारोऽनेन निराकृतो भवति।

(४) मनुष्यो मरणधर्मा

(५) आत्मा न मरणधर्मा

(६) आत्मा अमृतस्वरूपी

अत्र विधिनिषेधगुणा मनोगता एव वस्तुनिष्ठा इव भान्ति । अनेन गुणक्रियाविनाकृत ज्ञानमसभावितमिति शून्यावगतिर्न सभावयितु शक्येति सिद्धयति ।

(७) ईश्वरस्सत्य

(८) यदीश्वरस्सत्यधर्मशीलोऽभविष्यत् तर्हि दुष्टान् न्यग्रहीष्यत्

(९) अर्जुनोऽभिमन्युर्वा वीराग्रणी

अत्र स्वरूपकार्यकारणभावेतरेतरभावसबन्धादयो मानसा एव वस्तुनिष्ठा इव द्योतन्ते । एतेनादृष्टायत्तमाकस्मिक किमपि न सभावयितु शक्यत इति स्पष्ट भवति ।

(१०) पृथिवी वर्तुलाकारा

(११) ग्रहा प्रायेण मनुष्यैरधिष्ठिता

(१२) ईश्वरस्सत्यस्स्यात्

एतेष्वन्त्येषु त्रिषूदाहरणेषु सभवासभवौ अस्तित्वनास्तित्वे आवश्यकत्वानुषङ्गिकत्वे मानसगते वस्तुनिष्ठे इव द्योतेते। अनेनाद्भुताविष्करण निराकृत भवति ।

अपि चात्र प्रथमद्वितीयत्रिकाभ्या वस्तूना अनन्तता द्योतिता भवति । तृतीयचतुर्थाभ्या कार्यकारणभावस्सूचितो भमति ।

तदित्थ केवलवस्तुपरामर्शे क्रियाकारकसबद्धवाक्यार्थपरामर्शे वा मनोगताना देशकालगुणक्रियाकार्यकारणभावादिसबन्धाना भान भवतीति ज्ञायते। तथाच वस्तु यथा वर्तते तथैव तन्मनो न गृह्णातीति स्पष्टम्।

## सशयैकान्त

किंच यथावदज्ञायमाने कथ वस्तुनो वस्तुज्ञानस्य वा याथार्थ्य वक्तु शक्यते । न वय वस्तु यथावज्जानीम । तथाच वस्तुज्ञान प्रमा

भ्रमो वेति सन्देहो जागर्ति । एव सिद्धान्तवाक्यार्थज्ञानमपि प्रमा भ्रमो वेति सशयो दुर्निवार । तद्वति तत्प्रकारक ज्ञान प्रमेति तार्किका वदन्ति नील पर्वत रक्तो घट इत्यत्र नीलत्वप्रकारकपर्वतविशेष्यक-ज्ञान च रक्तत्वप्रकारकपटविशेष्यकज्ञान च प्रमेत्युक्त भवति । नेद युक्त । न हि नीलरूप पर्वते रक्तरूप वा घट वर्तते तदुभयमपि मनोगतमेव पर्वतगतमिव घटगतमिव च भातीत्युक्तमेव । यदि नील पर्वत रक्तो घट इति ज्ञान प्रमा स्यात्तर्हि पीतश्शङ्ख इति पित्तदोष रुग्णस्य जायमान ज्ञान किमर्थं न प्रमेत्यङ्गीक्रियते । उभयत्रापि वस्त्वसगतमेव नीलादिरूप वस्तुनिष्ठमिव भाति । यद्यरुग्णैर्जनैराबालवृद्ध यद्यथा गृह्यते तस्मिंस्तथैव ज्ञाते तज्ज्ञान प्रमा भवतीत्युच्यते तर्हि भूमिं परित सूर्यस्सचरतीत्यरुग्णैराबालवृद्धमभ्युपगतेऽर्थोऽपि तथा ज्ञान प्रमा स्यात् । भूमिं परित सूर्यस्य सचरण मिथ्यैवेति हि अधुनातन–ज्यौतिषसिद्धान्त ।

एवमेव पृथिव्यप्तेजोवाय्वाकाशा पञ्च भूतानीति प्राचीनाना सिद्धान्त । स सिद्धान्तो नेदानी साधुरित्यङ्गीक्रियते । पृथिवी हि नानाविधलोहलवणचयमयी वर्तते । नह्ययस्ताम्रादिक पृथिवीति वक्तु शक्यते । नापि समुद्रलवणादि पार्थिव वस्तु । इत्थमेव जलमपि आक्सिजन् हैड्रोजन् नामकयोर्वायुरूपकयोर्वस्तुनोस्समेलनाद्भवतीत्यधुना-तनो भौतिकसिद्धान्त । वायुश्च आक्सिजन् नैट्रोजन् नामकयोर्वस्तुनो स्सयोग इति सिद्धान्त । तेजोऽपि दाहप्रकाशात्मकश्शक्तिविशेष न तु वस्तु इति भौतिकशास्त्रसिद्धान्त । आकाशोऽपि देशाख्यो न वस्तु। ततश्च यत् पञ्चभूताना ज्ञान प्रमा इति प्राचीनैर्गृहीतमासीत् तदिदानी भ्रम इति निपुण सप्रमाण च निरूपित वर्तते ।

किंच यत् ज्ञानमिदानीमस्माभि प्रमेत्यभ्युपगम्यते तदुत्तरस्मिन्

काले प्रायेण भ्रमस्स्यादिति पाश्चात्या विद्वांसो वदन्ति। तदेतत्सर्वं बाढ विचार्य यत् ज्ञान ज्ञानान्तरेण न बाध्यते तत् ज्ञान प्रमेत्युक्त भवति। तदिद वेदान्तिना समतमेव लक्षणम्। इद रजतमिति शुक्ति दृष्ट्वा भ्राम्यतो जनस्य यदुत्तरस्मिन् काले रजतकार्याकरणान्नेद रजतमिति ज्ञानमुत्पद्यते तज्ज्ञानेन पूर्वज्ञान बाधित भवति अतश्चेद रजतमिति ज्ञान भ्रम इति निश्चीयते।

इत्थमेव पृथिव्यप्तेजोवाय्वाकाशा पञ्च भूतानीति प्राचीनानां भ्रम अधुनातनभौतिकशास्त्रसिद्धान्तज्ञानेन बाध्यते। तथैव भानुर्न चरति अपितु भूमिश्चैरतीत्यधुनातननिश्चयेन प्राचीनो भ्रमो बाध्यत इति सिद्धम्। तथाच ज्ञानाबाध्य ज्ञान प्रमेति सुस्थितम्।

एतेन पृथिवी गन्धवतीति भ्रम एव, नहि पृथिवीत्येक वस्त्वस्तिनापि तस्या गन्धो वस्तुतोऽस्ति। गन्धो हि गुणो रूपादिरिव मनोगत एव बाह्यवस्तुसगत इव भाति। एवमेव त्र्यङ्गुल उन्नत चतुरङ्गुल दीर्घं पञ्चाङ्गुल विस्तृत फलकमिति यत्फलक देशसगतमिव दृश्यते तत्रापि भ्रम एव। देशो हि मनोगतो भाव इति पूर्वमेवोक्तम्। इत्थमेव इदानीं घटस्तदानीं पट इति कालसगतत्वेन घटपटादिज्ञान भ्रम एव कालो हि मनोगतो भाव बाह्यवस्तुसगत इव भातीति पूर्वमेवोक्तम्।

एतावता विचारेणेद सिद्धम्— यदस्माभिर्देशकालगुणक्रियादिशबलित वस्तु ज्ञातमिति व्यवह्रियते तत् देशकालगुणक्रियाद्यशबलिता, द्वस्तुस्वरूपादन्यदेव। न हि वस्तु यथास्वरूपमस्माभिर्ज्ञायते। यच्च ज्ञायते तन्न वस्तुयथास्वरूपमिति। सोऽय क्याटुपज्ञसिद्धान्तस्सर्वैरपि पाश्चात्यैरङ्गीकृतो वर्तते।

वस्त्वाभाससाक्षात्कारि किं ज्ञातमेव स्वप्रकाशमाहोस्वित् प्रतिक्षण भिद्यमानाना नानाज्ञानानामाश्रय कश्चिदन्योऽस्ति वेत्ययमपि

विषय क्याट्नाम्ना विचारितो वर्तते —सोऽय देवदत्त इति प्रत्यभिज्ञा मयेद कृतामिति स्मृतिश्च ज्ञानसन्ततेराश्रयभूत कचनानिर्वाच्यमात्मान साधयितु शक्नुत सचात्मा प्रतिक्षण भिद्यमानाना ज्ञानानामाश्रयस्सन् तत्तत्कालिकवृत्त्यवच्छिन्न परिच्छिन्न एक सार्वकालिकवृत्त्यवच्छिन्न-चैतन्यात्मक अपरिच्छिन्न अपर इति द्विधाऽनुभूयते । नतु स्वरूपतो ज्ञायत इति केन निश्चितम् ? जड वस्तु वस्तुतो यथा न ज्ञायते प्रत्युत तदाभास एव ज्ञायते । तथैव चैतन्यमपि न वस्तुतो ज्ञायते किंतु तदाभास एवेति स्पष्टम् ।

अत्र केचित् जडाना वस्तूना स्वतोऽज्ञायमानत्वात् सर्वोऽय प्रपञ्च ज्ञानात्मक एवेति वदन्ति । क्याट् नामा विद्वास्तु जडाभासज्ञानाज्जडम-नुमित ज्ञानाश्रयचैतन्यमनुमितमिति जगत् जडचैतन्योभयात्मकमिव स्यादिति वदति । अन्येत्वनेकचैतन्यजडोभयात्मकमिद जगदिति मन्यन्ते ।

ईश्वरसत्तामधिकृत्यान्यै पाश्चात्यविद्वद्भिर्यानि प्रमाणान्युदाहृतानि तान्यपि स्वीयप्रमाणपरीक्षाया क्याट्नाम्ना विदुषा बाढ मीमासि-तानि । तेषु स्वानुभवप्रमाणमेकम् । कार्यकारणभावरूपसबन्धाधनिान्य-नुमानान्यपराणि ।

स्वानुभवरूप प्रमाणमित्थ डेकार्ट्स् लीब्निज् वुल्फ् नामभिर्वि-द्वद्भिर्वर्णित ' अह जानामि ' इत्याद्यनुभवबलाद्विज्ञानमयात्मसत्ता निस्सदेह ज्ञायते । सतो वस्तुनो नाशाभावात् आत्मा 'अनादिरनन्तश्चेति सिध्यति । व्यष्ट्यात्मनामनेकेषा समष्टिरेक ईश्वरोऽनुमीयत इति ।

अस्तु तावत्, अह जानामीति वस्त्वाभासज्ञानाश्रय कश्चित् । तावता नात्मसिद्धि नहि ज्ञानाश्रयो ज्ञानविषयो दृश्यते । ज्ञान-गोचरीकृतोऽपि दिक्कालादिमनोगतवस्त्वन्तरशबलित एव स दृश्यते । नतु यथास्वरूप ज्ञायत इति क्याट्नाम्ना विदुषा तत्प्रमाण निराकृतम् ।

खण्डज्ञानादखण्डवस्त्वनुमितिर्लोकानुभवसिद्धेति केचन पाश्चात्या विद्वास दिक्कालाद्यवच्छिन्नजडज्ञानात् दिक्कालाद्यवच्छिन्नचैतन्यज्ञनाच्च अखण्डजडानुमितिमखण्डचैतन्यानुमितिं च अङ्गीचक्रु ।

खण्डज्ञानेनाखण्डानुमितिर्दुस्साधा। अखण्ड खण्डाना सकलनया सपद्यते, खण्डसकलना त्वपरिमित कालमपेक्षते। स चापरिमित कालो वर्तमानकालात्पूर्वं व्यपेत खलु खण्डसकलना गणनपूर्तिकाले भवति, तदनन्तर च कालो वर्तत एवेति काल खण्डितो भवति। ततश्च कालानवच्छिन्नाखण्डवस्तुज्ञान न सिध्यतीति स्पष्टम्। एव देशविषयेऽप्यूहनीयम्। तथाचाखण्डानुमितिर्दुस्साधा इति क्याट् नाम्नो विदुषो मतम्।

यथा भूम्याकाशसन्धिर्नेदीयानिति मत्वा तमभिगच्छतो बालस्य पुन पुन दूरे वर्तमान सन्धिदेश पश्यत सन्धिज्ञानमाभासो मायैव वा, तथैव भूम्याकाशसन्धिज्ञानस्थानीय अखण्डवस्तुज्ञानमपि मायैवेति क्याट् नाम्नो विदुषो निश्चय ।

'जगन्नास्ति आत्मा नास्ति ईश्वरो नास्ति' इति क्याट्नाम्नो विदुषो मतमिति न भ्रमितव्यम्। जगदात्मेश्वराणा सत्ता प्रमाणबलान्न निश्चीयत इत्येव तस्याभिप्राय ॥

आर्. श्यामशास्त्री.

## ज्योतिश्शास्त्रस्य वेदमूलत्वनिरूपणम्.

(२ सम्पुट ९ संचिका ९९ पुटतमात्)

### अथ फलविचार

'नामावास्याया च पौर्णमास्या च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रियस्स्यात्' (स २-५-६) 'यदाग्नेयोऽष्टाकपालोऽमावास्याया च पौर्णमास्या चाच्युतो भवति' (स २-६-३) 'ब्रह्मवादिनो वदन्ति' 'न पर्जन्यो वर्षेत्' (स ५-२-७) इत्यादिवाक्यै निषिद्धकालदेशयो कर्माचरणे अशुभ फल सूच्यते 'कृत्तिकास्वग्निमादधीत' (ब्रा १-१-२) अनेनानुवाकेन अग्न्याधाने नक्षत्रभेदेन फलभेदश्श्रूयते 'या कामयेत दुहितर प्रिया स्यादिति। ता निष्ट्याया दद्यात्। प्रियैव भवति। (ब्रा १-५-२) 'य कामयेतानपजय्य जयेदिति। तमेतस्मिन्नक्षत्रे यातयेत्। अनपजय्यमेव जयति' (ब्रा १-५-२) इत्यादिभि उक्तकाले शुभकर्मकरणे शुभफल प्रतिपाद्यते। 'यो ह वा अहोरात्राणा नामधेयानि वेद। नाहोरात्रेष्वार्तिमार्च्छति'। ब्रा (३-१०-१०) इत्यादिभि वर्षर्तुमासपक्षदिनमुहूर्तादिकालपरिज्ञानात् रोगनिवृत्तिरुक्ता। 'य एवंविद्वानुदगयने प्रमीयते। अथयोदक्षिणेप्रमीयते' (याज्ञिकी ८०) इत्यत्र मरणकालभेदेन गतिफलभेदश्श्रूयते। 'नास्य गृहे रुदन्ति' 'नास्यामुष्मिन्लोकेऽन्न क्षीयते' 'नैन लोकेलोके मृत्युर्विन्दति' 'नार्तिमार्च्छति' 'सर्वमायुरेति' 'आयुष्मान्भवति' 'प्रजावान्भवति' 'पशुमान्भवति' 'रयिमान्भवति' 'तेजस्वी भवति' 'ओजस्वी भवति' 'ब्रह्मवर्चसी भवति' 'आयतनवान्भवति 'ऊर्जस्वान्भवति' यश-

स्वी भवति' 'वर्चस्वी भवति' 'अन्नवान्भवति' 'अन्नादो भवति' 'मेधावी भवति' 'इन्द्रियावी भवति' 'भ्राजस्वी भवति' 'हरस्वी भवति' 'महान्भवति' 'वसीयान्भवति' 'पयस्वान्भवति' 'दीर्घायुषो ह वै तत्र मनुष्या भवन्ति' 'पुमान्पुत्रो जायते विन्दते वसु' 'पीवर्यस्य जाया भवति' 'पीवान पुत्रा भवन्ति' 'य काम कामयते तमेतेनाप्नोति' 'पापीयान्भवति' 'मृत्यमेवाप्नोति' 'सायुज्य गच्छति' 'सलोकतामाप्नोति' 'सुवर्ग लोकमेति' इत्यादीनि शुभाशुभफलबोधकानि वाक्यानि बहून्युपलभ्यन्ते ॥ तादृशफलप्रदकर्मणा सूचकान्येव ग्रहाणा स्थित्यादीनि जन्मकालादौ भवन्ति । अनेन शास्त्रेण तत्तादृशावस्था विज्ञाय दुष्कर्मणा विनाशाय सत्कर्मणा साद्गुण्यायच शान्त्यादीन्विधाय कृतार्था भवेयुरिति शास्त्रमेतत् सम्यगुपकरोत्यस्मानिति ॥

## अथ कालविचार

'या जाता ओषधयो देवेभ्यस्त्रियुग पुरा' स (४-२-६) अत्र 'युगशब्द कालवाची पुरा सृष्टयादौ' इति भाष्यम् । कालवाचिना युगशब्देन 'रदाब्धयोऽयुताहता' (भास्कर) इत्याद्युक्ता ४३२०००० एतत्सख्याकसवत्सरात्मक काल, 'युगानि नारायणपूर्वकानि' (वराहमिहिर) 'पञ्चसवत्सरमययुगाध्यक्ष प्रजापतिम्' (वेदाङ्गज्यौतिषम्) इत्याद्युक्त प्रभवादिषष्टयब्दान्तर्गतसवत्सरादिपञ्चसवत्सरात्मक कालश्च शास्त्रे प्रतिपादित । एतद्द्वयस्यापि सृष्ट्यादौ अनुपपन्नत्वात् वर्षाश्शरद्वसन्त इति ऋत्वात्मक कालो भाष्ये गृहीत तथापि युगशब्दस्य कालवाचित्वे न किमपि बाधकम् । स काल पूर्वोक्तरीत्या शास्त्रे प्रसिद्ध ॥

'कृताय सभाविनम्। त्रेताया आदिनवदर्शम्। द्वापराय बहिःस्सदम्। कलये सभास्थाणुम्'। (ब्रा ३-४-१६) अत्र कृतादिशब्दा युगवाचिन। युगस्य कालवाचित्वं पूर्वमेव सिद्धम्। एतेन कृतादयो युगपादा व्याख्याता॥

'अग्निर्वाव सवत्सर' (ब्रा १-४-१०) 'सवत्सराय पर्यारिणीम्' (ब्रा ३-४-११) 'सवत्सरोऽसि परिवत्सरोऽसि' (ब्रा ३-१०-४) इत्यादिभि सवत्सर परिवत्सर इदावत्सर इद्वत्सर वत्सराख्या पञ्च सवत्सरा तत्तद्देवता वसन्तादिसवत्सराङ्गानि च निरूपितानि। 'सवत्सर दीक्षितो भवति' (आ २-८) इत्यनेन सवत्सर कालवाचीति ज्ञायते। 'एको अश्वो वहति सप्तनामा। त्रिणाभि चक्रमजरमनर्वम्' (आ ३-११) इत्यादिना कालात्मा सवत्सर रथवत् परिभ्रमतीति प्रतिपादितम्। 'द्वादशमासास्सवत्सर' (स १-५-७) अनेन एकस्मिन् वत्सरे द्वादश मासा द्वादशमासात्मकस्सवत्सरश्चेति प्रतिपादितम् 'षड्वा ऋतवस्सवत्सर' (स ५-२-६) इत्यनेन सवत्सरस्य षड्तव ऋतुषट्कात्मकस्सवत्सरश्चेति प्रतिपादितम्। 'चतुर्विꣳशतिरर्धमासास्सवत्सर' (स ५-६-७) अनेनैकस्मिन् वर्षे चतुर्विंशति पक्षा प्रतिपादिता 'तासा त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीस्सवत्सरस्य रात्रय' (स ९-५-८) अनेन सवत्सर षष्ट्युत्तरशतत्रयाहोरात्रात्मक इति प्रोक्त। 'द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि' 'वत्सं चोपावसृजत्युखा चाधिश्रयति' (स १-६-९) अत्र द्वादशयुग्मेन एकस्मिन् सवत्सरे द्वादश दर्शा द्वादश पूर्णमासाश्चेति चतुर्विंशति प्रतिपादिता 'तस्मादादित्यष्षण्मासो दक्षिणेनैति षडुत्तरेण' (स ६-५-३) इत्यत्रायनद्वयमाख्यातम् 'षड्वा ऋतव' (स १-५ ७) 'वसन्तमृतूना प्रीणामि' (स १-६-२) 'अय पुरोभुव.' (स ४-३-२) 'मधुश्च

माधवश्च वासन्तिकावृतू' (स ४-४-११) 'तस्माद्द्वन्द्वमृतव ' (स ५-४-२) 'तस्माद्द्वौद्वावृतू' (स ६-५-३) 'वसन्तेनर्तुना देवा ' (ब्रा २-६-१९) इत्यादिभि वसन्तादय तत्तद्देवता चैत्रादिद्वादशमासा एकैकस्य ऋतोश्चैत्रादिमासद्वय इत्यादिक प्रतिपादितम् 'ग्रीष्मो हेमन्त उत नो वसन्तश्शरद्वर्षास्सुवित नो अस्तु' (स ५-२-७) 'पञ्च वा ऋतवस्सवत्सर ' (स ७-२-६) इत्यनेन हेमन्तशिशिरयोरेकत्व निरूपितम् ॥

'मास दीक्षितस्स्यात्' (स ५-६-७) 'मास दीक्षितो भवति' (आ २-८) इत्यादिना कालवाचको मास इति ज्ञायते । 'क मासा ऋतवश्श्रिता' (आ १-८) अत्र सौरसावनचान्द्रनाक्षत्रा इति चतुर्विधा मासा अपि मासशब्देन गृहीता । 'मधुश्च माधवश्च' (स १-४-१४) 'अरुणोऽरुणरजा ' (ब्रा ३-१०-१) इत्यादिना मासनामान्यभिहितानि 'ससर्पोस्यहस्पत्याय त्वा (स १-४-१४, ६ ५-३)। त्रयोदश मासास्सवत्सर ' (स ५ ६-७) 'अस्ति त्रयोदशो मास इत्याहु । तेनैव त्रयोदश मासमवरुन्धे'। (स ६-५-३, आ ५-४) इत्यादिभि ससर्पांहस्पत्यधिमासा निरूपिता ॥

'चतुर्विंशतिरर्धमासा ' (स ६-२-३, आ ५-६) इत्यनेन पक्षाश्चतुर्विंशतिरिति निरूपितम् 'पवित्र पवयिष्यन्' (ब्रा ३-१०-१) इत्यादिना द्वादशशुक्लपक्षनामान्युक्तानि 'सहस्वान्त्सहीयान्' (ब्रा ३-१०-१) इत्यादिना द्वादशकृष्णपक्षनामान्यभिहितानि ॥

'षष्टिश्च त्रिंशका वल्गा । शुक्लकृष्णौ च षाष्टिकौ'। (आ १-३) अत्र एकैकस्य मुहूर्तस्य द्वे नाड्यौ त्रिंशन्मुहूर्तात्मकमेकमहोरात्रमेतत्षष्टि एक ऋतु एकैकर्तौ द्वौद्वौ शुक्लकृष्णपक्षौ शुक्लपक्षाहोरात्राणि त्रिंशत् कृष्णपक्षाहोरात्राणि त्रिंशत् । मिळित्वा षष्टिर्जाता । तत्र प्रथमश्शुक्लपक्ष द्वितीय कृष्णपक्ष इत्यादिकमभिहितम् ॥

'पञ्चदश वा अर्धमासस्य रात्रय' (स २-५-८) अत्रैकैकस्मिन् पक्षे 'पञ्चदशाहोरात्राणीति प्रतिपादितम् 'सञ्ज्ञान विज्ञान दर्शादृष्टा' (ब्रा ३-१०-१) इत्यादिना पूर्वपक्षाहोरात्राणा नामधेयान्यभिहितानि 'प्रस्तुत विष्टुतम्, सुता सुन्वती' (ब्रा ३-१०- ) इत्यादिना कृष्णपक्षाहोरात्राणा नामानि प्रतिपादितानि । 'राकामहम्' 'कुहूमहम्' 'सिनीवालि पृथुष्टुके' (स ३-३-११) इत्यादिभि पौर्णमास्यमावास्यातिथिभेदा निरूपिता । 'पूर्णा पश्चादुत पूर्णा पुरस्तात्' (स ३-५-१) यस्या तिथौ सर्वसवितृकिरणानुप्रवेशेन भासमानाशेषमण्डलश्चन्द्रो भवति सा तिथि पौर्णमासीति पूर्णिमालक्षण, 'सलिलमये शशिनि रवे दीधितयो मूर्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्त' इति बृहत्संहितावचनार्थश्च स्पष्ट बोधित । 'यत्ते देवा अदधुर्भागधेयम्' (स ३-५-१) अत्र यस्या तिथौ सूर्याचन्द्रमसौ सह सवसत सा तिथिरमावास्येति अमावास्यालक्षण प्रतिपादितम् । 'स एत चन्द्रमसे प्रतीदृश्यायै पुरोडाश पञ्चदशकपाल निरवपत्' (ब्रा ३-१-६) अत्र प्रतीदृश्याशब्देन प्रतिदिन चन्द्रमसो गतिभेदेन तिथिभेदो भवतीत्यर्थो निष्पद्यते । 'द्वादश पौर्णमास्य । द्वादशाष्टका । द्वादशामावास्या' (ब्रा १-५-१२) 'पौर्णमास्यष्टकामावास्या' (ब्रा ३-११-१) अत्र मार्गशीर्षकृष्णादिचतुर्षु कृष्णपक्षेषु सप्तम्यादि तिथित्रयप्रकारेण अष्टका द्वादश इत्यादय प्रसिद्धा । 'अहोरात्रानर्धमासान्मासानृतून्संवत्सरमाप्त्वा' (ब्रा ३-१-६) अनेन 'संवत्सरोऽसि नक्षत्रेषु श्रित' (ब्रा ३-११-१) इत्यादिभि पञ्चाशतावाक्यैश्च संवत्सरान्तर्गत ऋतु, ऋत्वन्तर्गतो मास तदन्तर्गत पक्ष तदन्तर्गत दिनम्, इति वर्षादिकालेषु लघुत्वमहत्त्वे प्रतिपादिते ॥

'कृत्तिका नक्षत्रमग्निर्देवता' (स ४-४-१०) 'कृत्तिकास्वग्निमा-

दधीत' (ब्रा १-१-२) "'अग्ने कृत्तिका' (ब्रा १-५-१) 'अग्निर्न पातु कृत्तिका' (ब्रा ३-१-१) इत्यादिभि अश्विन्यादिनक्षत्राणि तत्तद्देवताश्च प्रतिपादिता 'अभिजिन्नामनक्षत्रम्। उपरिष्टादषाढानाम्। अवस्ताच्छ्रोणायै (ब्रा १-५-२) इत्यनेन 'पादश्चतुर्थ किल विश्वभस्य नाड्यश्च विष्णो प्रथमाश्चतस्र। उक्ताभिजिद्भुक्तिरिति' इत्युक्तमभिजिन्नक्षत्रस्वरूप निरूपितम्। 'सप्तऋषय प्रथमा कृत्तिकानामरुन्धती यद्ध्रुवता ह निन्यु। षट्कृत्तिका मुख्ययोग वहन्तीयमस्माकमेधत्वष्टमी' (एकाग्नि १-९) अनेन सप्तर्षीणामरुन्धत्याश्च नक्षत्ररूपत्व प्रतिपादितम् "'सलिल वा इदमन्तरासीत्। यदतरन्। तत्तारकाणा तारकत्वम्। योवा इह यजते। अमु स लोक नक्षते। तन्नक्षत्राणा नक्षत्रत्वम्'। (ब्रा १-५-२) इत्यत्र तारा नक्षत्र चेति भेदद्वय सूचितम्। अत्र शास्त्रेतु—'भूमेर्बहिर्द्वादश योजनानि भूवायुरत्राम्बुदविद्युदाद्यम्, (भास्कर) इत्यत्र आवहसज्ञो भूवायु स च भूगोळात् परितोपि द्वादशयोजनपर्यन्त तदूर्ध्व प्रवहवायु तत्सधौ आवहवायावेव मेघादयोवर्तन्ते ते प्रवहवायु न प्रविशन्ति तद्वायुस्कन्धसन्धौ कानिचिन्नक्षत्राकाराणि ज्योतीषि वर्तन्ते तान्येव ताराशब्देनोच्यन्ते तासा गत्याद्यभावात कदाचित् तद्वायुद्वयसघर्षणात् काश्चन अध पतन्ति। यान्यश्विन्यादिनक्षत्राणि तानि नक्षत्रचक्रे वर्तन्ते कदाचिदपि न पतन्तिच इत्यादिक निरूपितम्। अतएव वेदे नक्षत्रनिर्देशप्रकरणे प्रायश कृत्तिकानक्षत्रमार्द्रानक्षत्रम् इत्यादिनक्षत्रशब्द एव प्रयुज्यते न तु चित्रातारा स्वातीतारेत्यादि। शास्त्रे तु उभयोरप्यभेदविवक्षया ताराशब्द क्वचित्क्वचित्प्रयुज्यते॥

'देवनक्षत्राणि वा अन्यानि। यमनक्षत्राण्यन्यानि। कृत्तिका प्रथमम्। विशाखे उत्तमम। तानि देवनक्षत्राणि। अनूराधा प्रथ-

मम् । अपभरणीरुत्तमम् । तानि यमनक्षत्राणि । यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात्' । (ब्रा १-५-२) इत्येतैरश्विन्यादिनक्षत्रेषु कृत्तिकादिविशाखान्तानि चतुर्दशनक्षत्राणि देवनक्षत्राणि तान्येव शुभानि तेष्वेव शुभकर्म कर्तव्यम् । अनूराधादिभरण्यन्तानि अभिजित्सहितानि चतुर्दशनक्षत्राणि यमनक्षत्राणि तान्यशुभानि तेषु शुभकर्म न कर्तव्यम् इत्यादिकमभिहितम् ॥

'यानि देवनक्षत्राणि । तानिदक्षिणेन परियन्ति । यानि यमनक्षत्राणि । तान्युत्तरेण' । (ब्रा १-५-२) इत्येतै खमध्यस्थविषुवद्रेखायामेव सर्वाणि नक्षत्राणि नसन्ति कृत्तिकादिविशाखान्तानि चतुर्दश नक्षत्राणि मध्यरेखाया दक्षिणभागे सन्ति अन्यान्युत्तरभागे इत्युक्त्या नक्षत्राणा दक्षिणोत्तरशराशा सूचिता । शास्त्रेतु—'पैत्रर्क्षपुष्यान्तिमवारुणानाम्' (भास्कर) इत्यादिना पुष्यमखाशतभिषग्रेवतीना मध्यगतत्वात् तेषा शराशाभाव प्रतिपादित. । अतश्शास्त्रे चतुर्विंशतिनक्षत्राणामेव शराशा पठ्यन्ते । 'यत्पुण्य नक्षत्रम्' (ब्रा १-५-२) अस्मिन्ननुवाके 'नक्षत्रपुरुषाङ्गविभाग', नक्षत्रोत्पत्तिक्रमश्च पठित ॥

'नक्षत्राय स्वाहोदेष्यते स्वाहा । उद्यते स्वाहोदिताय स्वाहा' । (ब्रा ३-१-६), अत्र नक्षत्राणामुदिताद्यवस्थाविशेषा प्रतिपादिता । 'नक्षत्रेष्टका उपदधाति' इत्यादि 'तस्मात्प्राचीनानि च प्रतीचीनानि च नक्षत्राण्यावर्तन्ते' (स ५-४-१) अत्र—कृत्तिकादिविशाखान्तमेक नक्षत्रपथम् । अनूराधादिभरण्यन्तमेक नक्षत्रपथम् । सर्वेषा नक्षत्राणा भचक्रभ्रमणवशेन ग्रहवत् उदयानन्तर प्रत्यग्गति अस्तानन्तर प्राग्गति प्रतिदिन स्वल्पा प्राचीना गतिरप्यस्ति सा

सौक्ष्म्यान्नोपलभ्यते । इत्यादि भचक्रस्वरूप यत्किंचित्प्रतिपादितम् । किंच अत्र नक्षत्रशब्देन ताराग्रहा अप्युच्यन्ते तेषा वक्रानुवक्रादिगतिभेदात् प्राग्गति प्रत्यग्गतिश्चाप्यस्ति इत्यादिकमभिहितम् । किंच—यत्रोदितोऽर्क किल तत्र पूर्वा तत्रापरा यत्र गत प्रतिष्ठाम् । तन्मध्यतोऽन्ये च ततोऽखिलानामुदक्स्थितो मेरुरिति प्रसिद्धम् ॥ इति भास्कराचार्योक्तदिग्विभागक्रमश्च प्रतिपादित । किंच—पुण्यकृता नक्षत्रलोकप्राप्तया ज्योतीरूपत्वमास्ति इत्यादयो बहवो विषया प्रतिपादिता ॥

"ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसिध्रुवतस्स्थितम् त्व नक्षत्राणा मेथ्यसि समा पाहि पृतन्यत" (एकाग्नि १-९) फलितसस्यमर्दनार्थं परिष्कृता भूमि कण बलीवर्दबन्धनार्थं कणमध्ये स्थापित स्थाणु मेथी खलेवालीति चोच्यते तस्या पञ्चषान्वा सप्ताष्टौ वा वृषभान् एकयैव रज्जुना बध्नन्ति ते वृषभा मेथीं परित परिभ्रमन्त पादै फलितसस्यानि घातयन्ति तद्घातात् तृणानि धान्यानि च पृथक्पृथग्भवन्ति तेषामनडुहा स्वेच्छया अत इत अनपगमनार्थं निश्चला मेथी दृढ यथा स्थापिता तद्वत् नक्षत्राणा ग्रहाणा च अत इत अनपगमनार्थं मेथीवत् धृढ स्थापित ध्रुव नाम नक्षत्र अतएव तस्य ध्रुवत्व निश्चलत्व च । तत्परित नक्षत्रचक्र तदन्तर्ग्रहाश्च अन्यत्रानपगम्य क्लृप्तस्थानेष्वेव वृषभवद्भ्रमन्ति अनेन—"भानामधश्शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्रा । एषामधश्च भूमि मथीभूता खमध्यस्था" इत्यार्यभटीयार्थ प्रतिपादित । एव भूमे आकाशमध्यगतत्वात् मेथीवत् दृढत्वात् परितो ग्रहभ्रमणाच्च भूमे र्निश्चलत्व निराधारत्व च निरूपितम् ॥

'यत्पुण्य नक्षत्रम्' (ब्रा १-५-२) इत्यत्र पुण्याहस्वरूप

निरूपितम् । 'देवस्य सवितु प्रात प्रसव प्राण' (ब्रा १ ५-३) इत्यादिना प्रातस्सगवमध्याह्नापराह्णसायाह्नाख्या पञ्चकाला प्रतिपादिता । 'भूत भव्य भविष्यत्' (स ७-३-१२) इत्यनेन भूतादिकालत्रय सूचितम् 'प्रातस्सगवेसायम्' (ब्रा १-४-९) 'यत्प्रातर्मध्यदिन साय च तानि सवनानि' (या ८०) इत्यादिना सवनत्रयकाल प्रतिपादित 'प्रातश्च साय च' (स ६-५-२, ब्रा १-४-९) 'ते अहोरात्रे अभवताम्' (ब्रा १-५ १०) 'अहश्च रात्रिश्च' (आ ३-९) इत्यादिभि अहोरात्रात्मक कालद्वय प्रतिपादितम् 'चित्र केतु' (ब्रा ३-१०-१) इत्यादिना अह्नि द्विघटिकात्मकपञ्चदशमुहूर्ताना 'दाता प्रदाता' (ब्रा ३-१०-१) इत्यादिना रात्रौ घटीद्वयात्मकपञ्चदशमुहूर्ताना च नामानि प्रतिपादितानि । 'इदानीं तदानिमेतर्हि क्षिप्रमजिरम्' (ब्रा ३-१०-१) इत्यादिना द्विघटिकात्मकमुहूर्तेऽपि निमेषादय पञ्चदश सूक्ष्मकालावयवा प्रतिपादिता ॥

## अथाङ्कविचार

'एकयाऽस्तुवत' (स ४-३-१०) 'एकाचमे' (स ४-७-११) 'एकस्मैस्वाहा' (स ७-२-११) 'प्रथमा द्वितीयेषु श्रयध्वम्' (ब्रा ३-११-२) इत्यादिभि एकादिपरार्धान्ताङ्का एकादिविषमाङ्का द्व्यादिसमाङ्का, एकोत्तरद्व्युत्तरत्र्युत्तर, चतुरुत्तर पञ्चोत्तर, दशोत्तर, शतोत्तराद्यङ्काश्च निरूपिता 'एकाच शत च' (स ४-४-१२) इत्यनेन अङ्कना वामतो गति, एकाद्यङ्कस्थानानि च प्रतिपादितानि.

'यदुपन्न स्तृणीयात्' इत्यादि 'द्विस्सपद्यते' (स.२-६-८) (१+१=२) 'अथ त्रीणि वै यज्ञस्येन्द्रियाणि । अध्वर्युर्होता ब्रह्मा' (ब्रा १-८-६) (१+१+१=३) 'चत्वारो ह्येते हविर्यज्ञस्यार्त्विज । ब्रह्मा

होताऽध्वर्युरग्नीत्' (ब्रा ३-३-८) (१+१+१+१=४) 'भीषाऽस्माद्वात पवते— मृत्युर्धावति पञ्चम इति' (उ २-८) (१+१+१+१+१=५) 'त्रीन्परिधीन्परिदधाति। ऊर्ध्वे समिधावादधाति। अनूयाजेभ्यस्समिधमतिशिनष्टि। षट्सपद्यन्ते' (ब्रा ३-३-७) (३+२+१=६) 'चतुरुन्नयति। द्विर्जुहोति। समित्सप्तमी' (ब्रा २-१-५) (४+२+१=७) 'घृणिरिति द्वे अक्षरे। सूर्य इति त्रीणि। आदित्य इति त्रीणि। एतद्वै सावित्रस्याष्टाक्षर पदम्' (ब्रा ३-१०-९) (२+३+३=८) 'पञ्च पुण्यानि नक्षत्राणि। चत्वार्यश्लीलानि। तानि नव' (ब्रा. १-५-३) (५+४=९) 'दशभि कल्पै रोहति। नव वै पुरुषे प्राणा। नाभिर्दशमी' (ब्रा १-३-७) (९+१=१०) 'एकादश प्रयाजान् यजति दश वै पशो प्राणा आत्मैकादश' (स ६-३-७) (१०+१=११) 'षट्पुरस्तादभिषेकस्य जुहोति। षडुपरिष्टात्। द्वादश सपद्यन्ते' (ब्रा १-७-७) (६+६=१२) 'चतुर्दशरात्रो भवति सप्त ग्राम्या ओषधयस्सप्तारण्या' (स ७-३-४) (७+७=१४) 'चतुर्दशैताननुवाकान् जुहोति। प्रयासाय स्वाहेति पञ्चदशम्' (ब्रा ३-९-११) (१४+१=१५) 'सप्तदशान्वाह द्वादश मासा पञ्चर्तव (स ६-३-७) (१२+५=१७) 'अष्टादशिनोऽजामित्वाय। नवनवालभ्यन्ते सवीर्यत्वाय' (ब्रा ३-९-१) (९+९=१८) 'विंशो वै पुरुषो दशहस्त्या अङ्गुल्यो दशपद्या' (स ७-३-९) (१०+१०=२०) 'द्वादशमासा पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश' (स ७-३-१०) (१२+५+३+१=२१) 'त्रि प्रवृणक्ति' इत्यादि 'चतुर्विंशतिस्सपद्यन्ते' (आ ५-६) (३+३+६+१२=२४) 'सूर्ये चक्षुर्गमयतात्' इत्यादि 'षड्विंशतिरस्य वङ्क्रय' (ब्रा ३-६-६) (१३+१३=२६) 'नव प्रयाजा इज्यन्ते। नवानूयाजा। अष्टौ

हवींषि । द्वावाघारौ । द्वावाज्यभागौ । त्रिंशत्सपद्यन्ते' (ब्रा १-६-३) (९+९+८+२+२=३०) 'षोडशभिर्जुहोति षोडशभिर्गृह्णाति द्वात्रिंशत्सपद्यन्ते' (स ६-१-१) (१६+१६=३२) 'एकादश प्रातस्सवने दक्षिणा नीयन्ते। एकादशमाध्यन्दिने सवने । एकादश तृतीयसवने । त्रयस्त्रिंशत्सपद्यन्ते' (ब्रा ३-७-१) (११+११+११ =३३) 'त्रयस्त्रिंशद्वै देवता । अश्वश्चतुस्त्रिंश' (ब्रा ३-७-१) (३३+१=३४) 'मा छन्द इति दक्षिणत उपदधाति' इत्यादि 'षट्त्रिंशत्सपद्यन्ते' (स ५-३-२) (१२+१२+१२=३६) 'एकशतेन दर्भपुञ्जीलै पवयति । शतायुर्वै पुरुषश्शतवीर्य । आत्मैकशत' (ब्रा १-७-६) (१००+१=१०१) 'त्रीणि च शतानि त्रयस्त्रिंशत चाथ सैव सहस्रतम्यभवत्' (स ७-१-५) (३००+३३=३३३ +३३३+३३३+१=१०००) इत्यादिभि सकलनक्रमो निरूपित ॥

'द्वौषडहौ भवतस्तानि द्वादशाहानि सपद्यन्ते' (स ७-४-११) (२×६=१२) 'त्रयष्षडहा भवन्ति तान्यष्टादशाहानि सपद्यन्ते' (स ७-४-११) (३×६=१८) 'चत्वारष्षडहाभवन्ति तानि चतुर्विंशतिरहानिसपद्यन्ते' (स ७-४-११) (४×६=२४) 'सहस्रमन्वाह इत्यादि दशदशसपाद जुहोति' (ब्रा ३-८-६) (१०×१०=१००×१० =१०००) इत्यादिभिर्गुणकार प्रदर्शित ॥

'पञ्चपञ्चाशतस्त्रिवृतस्संवत्सरा इत्यादि विश्वसृजा सहस्रसवत्सरम्' (ब्रा ३-१२-९) (५×५०=२५०+२५०+२५०+२५० =१०००) अनेन गुणन सकलन च निरूपितम् ॥

'अक्ष्णया व्याघारयति' (स ५-२-७) 'अक्ष्णयोपदधाति' (स ५-२-१०) 'दक्षिणमसमुत्तरां श्रोणिं दक्षिणाश्रोणिमुत्तरमस मध्यम्' (शुल्बसूत्रम्) ॥

अत्र अक्ष्णया वक्ररीत्या नैऋऋत्यामुपक्रम्य ऐशान्या समापनम् वायव्यामुपक्रम्य आग्नेय्या समापन च वक्रत्वम् । प्रतीच्यामुपक्रम्य प्राच्या समापन अवाच्यामुपक्रम्य उदीच्या समापनच आर्जवम् । इति व्याख्यानात् चतुरश्र क्षेत्रे कोणरेखाद्वययोग मध्यरेखाद्वययोगश्च तत्क्षेत्रमध्य भवतीत्युक्त्या भुजकोटि कर्णादिरेखागणित सूचितमिति ॥

### सङ्ख्याबोधकपदानि

(१) आत्मा । (२) अश्विनौ, पक्षौ । (३) व्याहृतय , लोका । (४) वेदा । (५) प्राणा , विषया , इन्द्रियाणि, भूतानि । (६) ऋतव । (७) ऋषय , लोका , पर्वता । (८) वसव । (१०) दिश । (११) रुद्रा । (१२) आदित्या', अष्टका । (१३) विश्वेदेवा । (१५) इध्म , तिथय , सामिधेन्य । (२१) सामिध' । (३३) देवता ॥

एव शास्त्रस्य वेदमूलत्वबोधकानि वेदवाक्यानि बहून्युपलभ्यन्ते। तेष्वत्र दिङ्मात्र प्रदर्शितम् ॥

अत्र केचित् युक्तेरेव प्राधान्यमङ्गीकृत्य सृष्टिर्नास्ति प्रळयोपि नास्ति, अद्य यथा सूर्यचन्द्रादिस्थिति तथैव सर्वदापि स्यादिति वदान्ति—अत्रोच्यते—सृष्ट्यादीनामङ्गीकारे काऽनुपपत्ति ? अनङ्गीकारे कावोपपत्ति ? शास्त्रेषु असति बाधके युक्त्यभावेपि अतीन्द्रियास्सर्वेपि विषया शब्दादिप्रमाणबलादेव ग्राह्या इति सिद्धान्तितम् अन सृष्ट्यादीनामनङ्गीकारे शास्त्राप्रामाण्यसम्भवात् अङ्गीकारे बाधकाभावाच्च युक्त्यभावेपि सृष्ट्यादयो ग्राह्या एव ॥

यद्यपि—इष्टकालादपि ग्रहानयनस्य कर्तुं शक्यत्वेपि सृष्ट्यादित एव ग्रहानयन कर्तव्यमिति को नियम ? यत्रकुत्र स्थितानामपि ग्रहाणा स्फुटकर्म कर्तुं युज्यते अश्विन्यादौ यदा सर्वे

ग्रहा स्थिताः तदारभ्यैव स्फुटकर्मणि कर्तव्यत्वेन सृष्ट्यादौ सर्वेषा अश्विन्यादिस्थिति कुत कल्पनीयेति च शङ्कोदेति तथापि ज्योतिश्शास्त्रस्य स्वातन्त्र्याङ्गीकारे इष्टकालात् यत्रकुत्रस्थितानामपि ग्रहाणा स्फुटीकरणेच न कोपि दोष तथापि शास्त्रस्य वेदाङ्गत्वेन वेदेषु सृष्ट्याद्युपगमात् सृष्ट्याद्यश्विन्यादितोग्रहानयने च बाधकाभावात् अनेक महर्षिसमतत्वाच्च शास्त्रस्व वेदागत्व सृष्ट्याद्याश्विन्यादितो ग्रहानयन ञ्च युक्तमेव ॥

अन्ये पुन —वराहमिहिरादिग्रन्थेषु जतुम, लेय, जूक, तौक्षिक, आकोकेर, इत्यादि ग्रीक् शब्दप्रयोगात् मेषादिराशिविभागक्रम ग्रीक् जनेभ्य वराहमिहिरादिभिरधीत इति, अनेन तत्पूर्व मेषादिक्रमो नासीदिति ज्ञायते इति च वदन्ति ॥

तदयुक्तम्—'उपयामगृहीतोऽसि स९सर्पोस्य९हस्पत्यायत्वा' (स १-४-१४) त्रयोदशमासास्सवत्सर' (स ५-६-७) 'अस्ति त्रयोदशोमास इत्याहु । तेनैव त्रयोदशमासमवरुन्धे' (स ६-५-३) इत्यादिभि अधिकमासादय प्रतिपादिता—यस्मिन् चान्द्रमासे सूर्यस्य मेषादिसक्रान्तिर्नास्ति सोऽधिमासः यस्मिन् सौरमासे दर्शयुगळ पूर्णिमायुगळ वा अस्ति स ससर्पाख्यो मास यस्मिन् सौरमासे रेवतीनक्षत्रयुग्ममस्ति स मास अहस्पतिसज्ञक यस्मिन् चाद्रमासे सूर्य सक्रातिद्वय सभविष्यति स मास क्षयाख्य ॥

एते सर्वेपि सौरचाद्रसमीकरणार्थमेव प्रवृत्ता ये सौरेभ्योऽधिकाश्चान्द्रा त एवाधिमासा अतस्ते सौरमासैर्विना नोपलभ्यन्ते तेऽपि मेषादिराशिविभागाद्विना कथ ज्ञायेरन् एव तेषामधिमासादीना वेदमूलत्वात्, मेषादिसौरमासानामपि वेदमूलत्वसिद्ध्या राशिविभागक्रमस्यापि वेदमूलत्व सिद्धमेव । किंच अस्मिन् शास्त्रे गर्गादय अष्टौ

सिद्धाता व्यासाद्या अष्टादश संहिताश्च प्राचीनप्रमाणग्रंथा । तेषु स्कन्धत्रयविषया अपि प्रतिपादिता तत्र खगोळे द्वादशराशिसप्तविंशतिनक्षत्रात्मक भचक्रम् तदादिरश्विन्यादित एव । अश्विन्यादि सपादनक्षत्रद्वयमेको राशि स एव प्रथमो मेषश्च इत्यादिक सर्व स्पष्टमभिधाय सर्वेष्वपि राशिषु होरानवाशादिसप्तवर्गविभागक्रमोपि निरूपित

मन्वादिधर्मशास्त्रेष्वपि सौरचान्द्रादिमानमासनिर्णये सक्रमणा पुण्यकालनिर्णयादिषु च मेषादिराशय प्रतिपादिता अतो मेषादिराशि व्यवहार सृष्ट्यादितोप्यस्तीति सिद्धम् तथासति ग्रीक् भाष शब्दा कुत सगृहीता इति चेत् लोके यदा यद्भाषाशब्दा प्राचुर्येण प्रसिद्धा भविष्यन्ति तदा ते शब्दास्सर्वैरपि व्यवह्रियन्ते । इदानी अर्जट् जबाबु रजा अप्लिकेषन् इत्यादिवत् । लीलावत्या भास्कराचार्येणापि मण , सेर , घटिका, इत्याद्या आलङ्गीर्षाहराज्ये प्रसिद्धा तुरुष्कसज्ञा प्रतिपादिता तावता तत्सज्ञाप्रतिपादिताविषया शब्दा वा पूर्वमत्र नासन् तत्तज्जनेभ्यस्स्वीकृता इति वक्तु कथ शक्यते ? तदानीं तत्तच्छब्दप्रसिद्ध्या तेते शब्दा भास्कराचार्येणापिप्रयुक्ता . किंच राश्यादीना पर्यायनामानि लोकव्यवहारादपि स्वीकर्तव्यानीति ग्रन्थकर्तृभिरेवोक्तम् यथा—

लोकाना व्यवहारतोन्यदपिच ज्ञात्वा वदेद्दैववित् । पर्यायमन्यमुपलभ्य वदेच्च लाकात् । सङ्ख्याम्तु लोकसिद्धा । लग्नादिष्वभिधीयते च निखिल पर्यायनामान्तरम् । इत्यादिव्याख्याने च लोकप्रसिद्ध्यैव पर्यायनामान्तर प्रयोक्तव्यम् इति प्रतिपादितम् अतोग्रन्थेषु लोकसिद्धपदप्रयोगो न दोषायेति ।

एवमनेके श्रुतिस्मृत्यादिप्रयाणग्रन्थान् शब्दप्रामाण्य च अप्रमाणीकृत्य प्रत्यक्षमेकमेव प्रमाणमिति मन्वाना शास्त्राणि तिरस्कुर्वन्ति प्रमाणेष्वप्यप्रामाण्यवादिना वचनेषु कथ वा प्रामाण्यमिति सर्व शिवम्

वेदा प्रमाण स्मृतय प्रमाण धर्मार्थयुक्त वचन प्रमाणम् ।
यस्य प्रमाण न भवेत्प्रमाण कस्तस्य कुर्याद्वचन प्रमाणम् ॥

पोरस्त्याचलमौळिमण्डनमणि पाथोजरक्षामणि ।
तारावर्त्ममुरारिकौस्तुभमणिस्त्रैलोक्यभूषामणि ॥
शोकव्याकुलचक्रवाकरमणी सन्तोषचिन्तामणि ।
बाभाति द्युमणि पुरन्दरहरित्कान्तोरुनासामणि ॥

इत्थ ज्यौतिषरत्नेन नरहर्याख्यसूरिणा ।
शास्त्रस्य वेदमूलत्व ज्यौतिषस्य निरूपितम् ।

नरहरिदैवज्ञ

## महिशूरदेशाभ्युदयो नाम चम्पूप्रबन्ध

(२ स २ सचित्र १०४ तमपृष्ठात्)

माता शिशु पाति पय प्रदाय वत्स तथा पाति पयस्विनी च ।
ततो विशेषेण पय प्रवाहै त्व पास्यनेकानिह पाययित्वा ॥ १९

केवलमन्न केवलमम्भो यदि दीयते विशेष क ।
इति मत्वाऽम्ब ददासि त्वमन्नमम्भश्च सद्गति चापि ॥ २०

अत्यायतकुल्यामुखनिस्सरदम्बुप्रवाहरूपेण ।
करुणारसेन तेऽम्ब क्षितिरतिवितता विभाति शालियुता ॥ २१

इति स्तुवन्त त श्रीनिवासकविरित्याचख्यौ—सखे! अयमेव खलु श्रीमहिशूरराज्यलक्ष्म्या दुहितरीव निहितेन श्रीमद्भारतसार्वभौम-करुणाकटाक्षविभवेन विशेषतोऽभिवर्धित श्रीकृष्णराजसागरसेतुबन्ध । पश्य—

श्रीमन्मही्शूरपुरीं प्रति राजधानी
मायान्ति कार्यवशतस्सतत जना ये ।
अत्राप्युपेत्य सकला जलसेतुबन्ध
दृष्ट्वैव विस्मयकर ननु ते प्रयान्ति ॥ २२ ॥

ततस्तद्दर्शनेन पर विस्मितस्स च प्रत्यब्रवीत् भो! अयमाश्चर्यभूत एव सेतुबन्ध ।

तथा हि—

श्रीकृष्णराजेन्द्रनृपालकेन लोकोपकाराय कृते विचित्रे ।
अस्मिन्नुदग्रे जलसेतुबन्धे दृष्टे मन कस्य न विस्मित स्यात् ॥

तदनु श्रीनिवासकवि पुनरेवमभाणीत् —सखे। अत्र पश्य—

कन्नबाडीत्यभिख्या समुपगत इह ग्राम एव प्रसिद्धे
कश्चिद्देवालयोऽभूल्लसितबहुशिलादेवताचित्रकार्य ।
आसन् भूयोनिवेशास्सलिलमयमभूदद्य तत्सर्वमत्र
प्रत्यक्ष जातमन्ते भवति जलमय सर्वमित्युच्यते यत् ॥ २४ ॥

अथ गोविन्दसूरिस्तत प्रस्थाय महिशूरनगरगमनोत्कण्ठितमना द्रुतमागच्छन् काश्चन क्रोशानतीत्य पथि दृग्गोचरीभूत क चन प्रासादमालोक्य, कोऽयं रमणीयसन्निवेशो निवेश इति पप्रच्छ । पृष्टस्सच सखे! इय खलु महाराजकृपाकटाक्षविशेषेण विराजमाना राजयक्ष्मचिकित्साशालेत्युवाच । अहो! किमिद विचित्रम्? अस्मिन्नरण्ये वैद्यशालारचनेन कस्योपयोगस्स्यादिति पुन पृष्टस्स पुनरेव प्रत्यभाषत—

सखे। न तथा जानीहि। एष प्रदेश एव क्षयरोगग्रस्ताना समस्ताना अत्यनुकूल इति महाचिकित्साधुर्येषु भिषग्वर्येषु दत्ताभिप्रायेषु श्रीमान् महाप्रभु सुचरिताया स्वसोदर्या कृष्णाजाम्बाया स्मारकतया एता वैद्यशालामत्राकल्पयत् । तथाहि—

अय रम्योद्देशस्सुविमलचलन्मारुतयुत
महाचित्तोल्लासक्षमविविधविन्यासलसित ॥
पुराद्दूरीभूत मुखरजनसमर्दरहित
विशुद्धश्चात्यन्तोन्नतिमधिगत कल्पितहित ॥ २५ ॥

ततश्चोभौ प्रस्थितौ वर्त्मनि विविधा पुरातनी कथा परस्पर कथयन्तौ महिशूरराजधानी प्रविश्य श्रीकृष्णराजेन्द्रवैद्यशालामुपजग्मतुं । तत्र गोविन्दसूरिरात्मनस्सुहृदमेवमुदीरयामास—सखे ! अतिविस्तीर्णोऽद्यमार्गो राजधान्याम् । पुरा नैवमवर्तत । अत्र सर्वत्र नितान्तनिम्ना परिखाऽऽसीत् । पन्थास्तु केवल सकुचित एवावर्तिष्ट अत्र नेदृश प्रासादा अवर्तन्त । राजधान्यद्य नवैव दृश्यते । कोऽसौ नवो महान् प्रासाद उच्यताम् ? तदनु श्रीनिवासकवि रित्युवाच —

इय श्रीकृष्णराजेन्द्रवैद्यशालाऽनिविश्रुता ।
राज्ञा रोगिजने न्यस्ता दयाश्रीरिव भासते ॥ २६ ॥

सखे । एतद्वैद्यशालाविभव किंचिदिवावेदयामि । शृणु —

पर्यङ्कास्तीर्णशय्याशयितसमुचिताच्छादनाच्छादिताङ्ग
व्याधिग्रस्तार्तलोकव्रजहृदयसमुल्लाससपादयित्र्य ॥
भूयोविस्तीर्णजालप्रकरपरिसरद्वातसपातपूता
बह्वय कक्ष्या विशाला इह ननु परितस्सन्त्यधश्चोपरिष्टात् ॥

निष्णाता वैद्यशास्त्रे सदनुभवजुषोऽभ्यस्तनानाचिकित्सा
कारुण्यार्द्रान्तरङ्गा इह तु नियमिता वैद्यवर्या प्रसिद्धा ।
यच्छन्ति व्याधिजालप्रशमननिपुणान्यौषधान्यप्रमत्ता
सेवन्ते ह्यत्र भृत्या प्रभुमिव भिषजो रोगिण सर्वदापि ॥

इहानीत वत्सोल्लसितममित धेनुनिवह
प्रदोह्य प्रत्यक्ष प्रतिदिनमसमिश्रितजलम् ।
पयस्सायप्रातस्सदयहृदया नन्वधिकृताः
प्रभूत रोगिभ्य प्रददति समुद्भावितहिता ॥ २९ ॥

इहानेके नित्य दुरुपशमरोगा अपि जना
प्रदत्त पीत्वाऽहो तुवरमपि दिव्यौषधरसम् ।
द्रुत लब्ध्वाऽऽरोग्य मुदितमनसः प्राप्य सदन
शुभाशंसा राज्ञे विदधति कृतज्ञा अनुदिनम् ॥ ३० ॥

अन्यच्च—

सदष्टाश्शुनकेन सौख्यमयितु कूनूरिति व्याहृत
देश दूरतर प्रयाय बहव क्लेश भजन्तोऽभवन् ॥
तादृग्व्याधिजुषामिहैव विधिवत्कृत्वा चिकित्सा झडि
त्यारोग्य कलयन्त्यहो करुणया श्रीकृष्णभूमीशितु ॥ ३१ ॥

किंच—

नानाविधाक्षिरोगा कल्याणपुरे यथा तथाऽऽत्रापि ।
सम्प्राप्तसच्चिकित्सा द्रुतमधिगच्छन्ति दृष्टिनैर्मल्यम् ॥ ३२ ॥

तदाकर्ण्य प्रमुदितस्स पार्श्वतो निरूप्य, अये! केवलरक्तवर्ण उत्तुङ्गशिखरश्च क एष महासौध दर्शनमात्रेणैव मनो विकासयतीत्यप्राक्षीत्

स एव प्रत्यकथयत् —सखे शृणु इय तावत् श्रीचामराजेन्द्रकौशलकलाशाला अतीते क्रिस्तीये षड्डुत्तरनवशत्युपकलितैकसहस्रतमेऽब्दे प्राथमिकेमासे त्रिंशे दिने महीशूरराजधानीमेना स्वागतेन परिभूषितवता, अद्य भ रतचक्रवर्तिपदमलङ्कुर्वता •सुगृहीतनाम्ना श्रीमता पञ्चमजार्जुमहासार्वभौमेन निर्वर्तितमूलशिलाप्रतिष्ठापनमहोत्सवा स्मारकतया श्रीचामराजेन्द्रनामाङ्किता विभाति

अत्र किल क्वचित् विविधविलसितविचित्रदारुरचनाविशेष , क्वचित् वेत्रै नानाविधबन्धुरविचित्रासनपर्यङ्कादिपरिकरनिर्माणम् क्वचित् तापनताडनविस्तरणादिकरणविन्यस्तेन कालायसेन समस्तप्रशस्तवस्तु-

विरचनम् । क्वचित् लोहद्रावणरूपणोद्धर्षणप्रकाशनादिकरणम्, क्वचित् भासुरानेकदारुवस्तूपरचितगजदन्ताविन्यसनम्, चारुचन्दनदारुविचित्ररच-न च, क्वचित् दर्शनमात्राकलितचित्ताकर्षणचित्रतरचित्रविलेखनम्, क्वचि-दन्यादृशनानाविधमृन्मयाकृतिविधानम्, क्वचित् अनेकवस्तुनिर्माणोचि तायसमथनसमुत्किरणदारुच्छेदनादिसाधन नानायन्त्रक्रियाश्चाभ्यस्यन्ते लक्ष्मीकटाक्षप्रतिपालैरुद्योगलोलैस्सुशीलैर्वर्धिष्णुभिः पटुभिश्च बालै ।

किंचात्र वाणिज्योपयुक्तविविधगणित विज्ञानकार्यक्रमादिकम्, सङ्केतसकोचितोपन्यस्तवचनलेखनलाघवम्, व्यवहारोचितकर्णाटद्राविड घूर्जरमहाराष्ट्रादिनानाभाषापरिज्ञान च बोधयन्ति । अपिचात्रैव कुत्राचित् पुरोभागे वर्तते विख्याता आयुर्वेदमहापाठशाला । इह चरकसुश्रुतादयो महाग्रन्था पाठ्यन्ते, यथायुर्वेदविधिपरिकलितान्यौषधानि रोगिभ्यो दीयन्ते च ॥

किंचात्रैवैकदेशे विश्वजनीन पुस्तकभाण्डागार चास्ति इह विशे-षतो जनास्समागत्य विविधानि पुस्तकानि देशान्तरागतानि नाना-विधानि वृत्तान्तपत्राणि च मासदक्षिणामप्रदायैव लब्ध्वा यथाकाम प्रमुदिता पठन्ति ॥

अत्र देशे महाप्रभोस्साहाय्येन अस्मदायुर्वेदानुमतवैद्यचिकि-त्सानिलयाश्च बहवस्समुल्लसन्ति आकलितगोमहिष्यादिचिकित्साविधाना पशुवैद्यशालाश्च विजयन्ते ॥

ततो गोविन्दसूरिस्त प्रति, अहो! इत कृष्णराजेन्द्रवैद्यशाला इतश्चामराजेन्द्रकौशलकलाशाला, एतदुभयशाला बहिर्दर्शनान्तर्गतविषय-श्रवणाभ्या महान् मोदो मे सपद्यते । अन्त प्रवेशेन अशेषमपि विशेष परिशीलयितुमभिलषामि । अथापि नेदानीमवसर । अन्यदा कदाचित्

द्रक्ष्याम । सत्वरमग्रे सर मित्र अग्रे सरेत्युक्त्वा तेन सह तत प्रस्थित किञ्चिद्दूर गत्वा किमिदमत्यायत महाकलकलसकुल स्थानमित्यप्राक्षीत् ॥

तथा पृष्ट स्स निजगाद — सखे! पश्य एष खलु राजधानी वास्तव्यसमस्तजनाश्रय परिपूर्णागण्यपण्यवस्तुसचय महाविपणिवलय । य पुराऽतिसकुचित विस्तारितश्चेत् एकदेशसुलभानेकवस्तुजालवत्त्वेन महतीमुपकृतिमाकलयत्यय जनानामित्याशय मनस्याकलितवत प्रसन्न भावत प्रजाव्रजपुवत श्रीमत कृष्णराजनृपते करुणाप्रासारत इदानीमतिविस्तारतामापन्नस्सन् नानाप्रकारैरुत्तरोत्तरमभिवर्धिष्यमाणो वर्तते ॥

यत्र च स्थलमखिलमास्तीर्णशिलतया जनसचारानुकूल पतितायामपि महावृष्टावपाङ्किल रमणीयमस्ति । इद स्थानमतिविस्तीर्णमपीदानीं इतस्तत निरन्तरोपविष्टाना पुरत पृष्ठत, पार्श्वतश्च सरन्तीना अविनयान्धाना मातङ्गीनामतिसकुलतया सर्वतस्तन्मुखनिष्ठ्यूतचर्विततताम्बूलरसरागवत्तया च अन्त प्रवेशेऽत्याकुलतामेवाकलयत्यस्मादृशामाचारजडानाम् ॥

तदाकर्ण्य गोविन्दसूरौ अये बहुजनभूयिष्ठमेतत्पत्तनमधिवसता भवता इदमखिल कथचित् सह्यमेवेति समाधाय तत द्वित्राणि पदानि पुरोगच्छति श्रीनिमासकविरिदमगदत् ॥

सखे! इत पश्य एष खलु मैसूरु ब्याङ्क् इति प्रसिद्ध धननिक्षेपनिलय प्रजोपयोगाय महाराजवरेण्येन नवीनतया परिकल्पित प्रायो वणिजा धनिना चैष बहुभि प्रकारै महतीमुपकृतिमातनुते । तथाहि—

पण्य वस्तुवितानमत्र वणिजो निक्षिप्य नैज मिता
दत्त्वा वृद्धिमृण प्रगृह्य बहुधा वाणिज्यमातन्वते ॥

श्रीमन्तोऽत्र मुहुर्मुहुर्निदधतो वृद्ध्यै प्रभूत धन
किञ्चित्किंचिदिवानयन्ति समये सम्प्रेष्य लेख निजम् ॥३३

तच्छ्रुत्वा गोविन्दसूरौ सखे किमनेन धनिकजनैकानुकूलेन धननिक्षपनिलयेन कुटुम्बभरणक्लेशपरिपीडिताना ऋणसागरनिमग्नाना अस्मादृशा निस्स्वानामित्यधिक्षिप्तवति स एवमाख्यत् । अहो तादृशजनयोगक्षेमविचारो महाराजस्य मनसि नैवेति नावेहि । यत —

आधारीकृत्य सद्मप्रमुखमखिलमप्युत्तमर्णेषु भूय
निस्स्वा बह्व्यो यथेष्ट द्रविणमृणतया न प्रजास्सम्प्रगृह्य ॥
दत्त्वा वृद्धि प्रभूतामिह मुहुरचिराद्दुर्दशामाप्नुवन्ती
त्यस्मिन् राष्ट्रे दयालुर्नृपतिरतनुतान्योन्यसाहाय्यसङ्घान् ॥३४

अन्योन्यसाहायकसङ्घ एष प्रजाप्रदत्तद्रविणाशवृद्ध ।
मासप्रदानोचितसूक्ष्मवृद्धिस्वीकारसाह्योपकृताधमर्ण ॥ ३५

आदत्त सकल धन च युगपद्दातव्यमेवेति नो
निर्बन्धोऽत्र यदीषदीषदपि वा दत्त क्रमात् गृह्यते ।
सङ्घेऽस्मिन् मिलिता भवन्त्यतिमितद्रव्याशदानेन ये
तेषामत्यनुकूलता ननु बहि नैवेदृशी लभ्यते ॥ ३६

अत एव जना बहवो दिनेदिने सङ्घमेनमभियान्ति ।
इह वञ्चनादि न हि यद्भयोऽय राजकीयनियमस्य ॥ ३७

नैतत्सङ्घस्थाने तावद्द्रव्यस्यादान दान वा ।
विक्रीयन्ते नानावस्तून्युद्दयल्लाभेनाल्पेनैव ॥ ३८

तद्वचन निशम्य गोविन्दसूरि अये ! यद्येव अभिनन्दनीय एव

महाप्रभो प्रजापक्षपात इत्युक्त्वाऽग्रतोऽद्राक्षीदप्राक्षीच्च—

करधृतपृथुवेत्रा दार्ढ्यसंयुक्तगात्रा
परिकलिततनुत्रा वेष्टितोद्यच्छिरस्का ।
सरभसमभियाता पङ्क्तितोऽमी समेता
निगद क इह बाला कन्धरालम्बिचेला ॥ ३९

अथ श्रीनिवासकविरेव प्रत्यब्रवीत् —

स्कौटित्याख्या दधाना जगदुपकृतये प्रोद्यता अद्यविद्या
शालाबालास्सुशीला भवति यदि विपद्यस्य कस्याप्यकस्मात् ।
नोपेक्षन्तेविलोक्य त्वरितमुपगता शक्तितो भूरियत्नान्
कृत्वा साहाय्यमेते विदधति चरितं श्लाघ्यमेषामिदं हि ॥४०

एते खलु आकस्मिकक्षतार्तानां पथिकानां रुधिरार्द्राङ्गस्य वेष्टनाय कण्ठालम्बि शिरोवेष्टितं वा चेलं सद्य परिच्छिद्य उपयुञ्जते करनिहितं दण्डं च तदीयवस्त्रभारादिवहनाय । किंबहुना—

अत्र जनस्यावश्यकमेषा देहश्रमेण साध्यं च ।
साहाय्यमस्ति यद्यत् तत्सर्वं कुर्वते ह्येते ॥ ४१

एतेषां नियमस्त्वेवम् —

मिथ्या वाणी न वाच्या सततमुपकृतिर्यत्नमालम्ब्य कार्या
सह्या क्लेशास्समस्ता अपिच गुरुजने भूमिपाले च भक्तिः ।
कार्या धार्यं सुधैर्यं कथमपि विपदि प्राणिहिंसा न कार्या
याच्ञाकार्यं न कार्यं किमपि नियमतस्स्व वपू रक्षणीयम् ॥४२

अन्यच्च—

अस्मद्देशीयान् सकलान् बालकान् सुशिक्षितान् धीरानुदारान् सारासारविचारतत्परान् अरोगदृढशरीरान् आत्मावलम्बनैकपरान् देशसेवाधुरन्धरांश्च चिकीर्षुणा देशहितैषिणा श्रीमता युवराजेनात्र राष्ट्रे स्थापित एष स्कौट्नामकबालकसङ्घ शुक्लपक्षचन्द्रमा इव दिनेदिने सर्वतोऽभिवर्धते । बहुभि प्रकारै प्रोत्साहमातन्वान श्रीमान् स युवराजोऽस्य सङ्घस्य किरीटायते। किंबहुना—

निजमतितनुशक्त्या साधनीयैरनेकै
जनतातिहितकृद्भि श्लाघ्यसाहाय्यजालै ।
कथमपि ननु कार्या देशसेवेति बोध
स्वमनसि निदधाना नित्यमेते यतन्ते ॥ ४३

इति वदन् किञ्चिद्दूर गत्वा पुरतस्समायान्त कञ्चित् बालकसङ्घमालोक्य गोविन्दसूरिं प्रति एवमभिदधे। अयि सखे! अत्र पश्य अयमन्यो बालकसङ्घस्समायाति। एते सर्वेपि बधिरान्धमूका परस्पर साहाय्यमधिगतास्सञ्चरन्ति । शृणु—

भिक्षायाञ्चा कुक्षिपूर्त्यै विधातु
नित्य मार्गे सयुता स्सचरन्ति ।
इत्येतास्त्व माऽवमस्था इवान्यान्
सर्वेऽप्येते पश्य विद्यार्थिनो हि ॥ ४४

तदाकर्ण्य गोविन्दसूरौ कथमेते विद्यामभ्यस्यन्ति? किमेतत्? विस्मय कलयति ते वचनम्, इत्युक्तवति स एव प्रत्यकथयत्,—अये! किंचिदावेदयामि सावधानमाकर्णय यत —

बधिरान्धमूकसमुचितविद्याशालाऽतिविख्याता ।
अत्रास्ति राजधान्या प्रभुवरकरुणाकटाक्षपरिलसिता ॥ ४५

तत्र—

अन्धा मूका अपि च बधिरा पूर्वकर्मानुरोधात्
भूयश्शोच्या स्थितिमधिगता हन्त विद्यार्थिनोऽमी ।
हित्वा बन्धूनहह सकलान् दूरदेशादुपेता
विद्याभ्यास विदधति सदा सादर साधुवृत्ता ॥ ४५

तद्वचन निशम्य पुन गोविन्दसूरौ एतै का नाम विद्या समभ्यस्यते? इति पृष्टवति सोऽभणत् —सखे! बहुविधा विद्यास्समभ्यस्यन्ते । तथाहि—

सङ्गीत सरस श्रुतेस्सुखकर गायन्ति केचित्तथा
वाद्य केचन वादयन्ति विविध वीणामृदङ्गादिकम् ।
अन्ये केचन सवयन्ति सहसा नानाविधान्यशुका
न्यन्ये वैणवभाजनादि कलयन्त्यन्यादृश केचन ॥ ४६

अन्यच्च—

सूक्ष्मानुस्वाराचिह्नप्रकरविरचितान् प्रोद्धतान् क्लृप्तसञ्ज्ञान्
वर्णानन्धा स्पृशन्तो मुहुरखिलमभिज्ञाय तूर्णं पठन्ति ।
सञ्ज्ञातोनेडमूका प्रविदितविषया सुष्ठु सर्वं लिखन्ति
क्षिप्र देवप्रसादादितरकरकलास्वप्यभिज्ञा भवन्ति ॥ ४७

किंच—

क्लृप्ते काले सानुराग मिळित्वा सर्वेप्येते ह्येवमन्योन्यसाह्यम् ।
लब्ध्वा मार्गे सलपन्तो हसन्त सतन्वन्तश्चात्मसञ्ज्ञाश्चरन्ति ॥

इदमपि श्रोतव्यमवहितमनसा—

अक्ष्णोरीक्षणशक्तिमत्र बहव श्रुत्योश्श्रुतेश्शक्तता
जिह्वोच्चारणशक्तिमप्यधिगता काल व्ययन्ते मुधा ।
एव दीनतरा इमेऽङ्गविकला अप्यादरात्कुर्वते
विद्याभ्यासमितीदमाकलयति प्रीतिं न कस्यात्मन ॥ ४९

अन्यच्च—

भोक्तु दत्वाऽह्नि रात्रावपि सदधिघृत शाकसूपाढ्यमन्न
पातु पेय च हृद्य तदनु हितकर खादितु चापि खाद्यम् ।
धर्तु वस्त्र च दत्वा नियतदिवसतोऽभ्यञ्जन कारयित्वा
स्वीयान् पुत्रानिवैतान् इह खलु सहजप्रीतित पोषयन्ति ॥

तच्छ्रुत्वा प्रहृष्टस्स एवमवदत्— सखे! एन विचारमाकर्ण्य अतीव मुदितोऽस्मि । यत —

सपन्नास्सकलैर्दृढैरवयवैर्ये सन्ति केनापिवा
ते जीवन्ति भुवीदृशा उपकृतास्सद्युश्श्रेद्विशेष खलु ।
दत्वाऽन्न वसन कलास्समुचिता अभ्यास्य दीनानिमान्
प्रीत्या रक्षति य कृती स जगति श्रीकृष्णभूमीपति ॥५१॥

अहो! भगवान् सहस्रभानुरस्तमुपगत । सम्प्राप्तस्सन्ध्यावन्दन-समय । अथापि यत्रकुत्रचिदुपाविश्य कचित्काल विश्रान्तिसुखमनुभोक्तु अभिलषामि । यतोऽस्मिन् दिवसे नितान्त श्रान्तोस्मि ॥

श्रीनिवासकविरोमित्युदीर्य तत प्रस्थाय ल्यान्स्डौन्प्रमुविपणि-श्रेण्यादिक सदर्श्य स्थापितश्रीचामराजेन्द्रप्रतिबिम्ब स्थानमुपेत्य तमेव निजगाद—सखे! पश्य मध्यनिहितेन सुगृहीतनाम्नश्श्रीमतश्चामरा-

जेन्द्रप्रभो प्रतिबिम्बेन विलसिता चतुष्पथमध्यपरिशोभिता चतसृष्वपि दिक्षु निबद्धया सुरुचिररचनया अमृतशिलासोपातपरम्परया रमणीया राजधान्या कापि विभूषेवैषा विभासते सर्वतोभद्रमण्टपिका ॥

अथ गोविन्दसूरौ सर्वतोभद्रमण्डप त सर्वतो निपुण निरूप्य, अये! किमेतत्? मध्यस्थापिता तन्महाराजमूर्ति कुत एवमाच्छादिता-स्तीति पृष्टवति स एव बभाण—भो नाद्याप्येतदीय कार्यजाल समग्र-तामापन्नम्। अतएवैवमाच्छादनम्। अद्याहमेव मन्ये। यथा—

ख्याते पूर्वैर्धरित्रीपतिभिरथ मया पालित कीर्तिरम्य
श्रीमत्कर्णाटलक्ष्मीपरिलसितममु श्रीमहीशूरदेशम्।
पुत्र कृष्णाक्षितीन्द्र कथमयमवतीत्यादराद्द्रष्टुकाम
श्रीमच्चामेन्द्रभूमीपतिमणिरधुना तिष्ठतीवात्र गुप्त ॥ ५२ ॥

तन्मुखनिस्सृता ता वाणीं आकर्ण्य गोविन्दसूरिरेवमभाणीत् सखे! मह्यमेव रोचते। शृणु—

श्रीमत्कृष्णेन्द्रपृथ्वीरमणमणिरय केवल भक्तियुक्त
स्ताते ख्याते स्वकीये दृढमिह निहिना चेदिय तस्य मूर्ति।
स्याद्यातायातकाले मम ननु सतत तत्स्मृतिर्दर्शनादि
त्यन्तस्थेनाशयेन स्वपितुरिह शुभा स्थापयामास मूर्तिम् ॥

अन्यच्च—

मुक्तस्थूलशरीरोऽपि चामराजमहीपति।
जीवन् कीर्तिशरीरेण सर्वत्र परिशोभते ॥ ५४ ॥

तद्गिरमवधार्य श्रीनिवासकवि, सखे! सत्यमाह भवान् याहि पुरोगच्छाव इति तत्कर गृहीत्वा सत्वर निस्सृत्य शिवानुग्रहसजातशिव-

ङ्कराशिवसमुद्रमहाजलपात समुत्पादितान्यादृश विद्युच्छक्तिसभूत महा-तेजस्सभारस्सभृत निरन्तरनिस्सरन्महानिनादानिर्जितनदीप्रवाहन्निर्घोष पुर प्रदर्श्यमानस्पर्शमात्रसभवन्महापायसूचकलेखनोपलक्षित विविधयन्त्र-जालजटिल आकाशगतानेकतन्त्रीविसरनियन्त्रित असाधारणमहाप्रभा-प्रकरप्रभासुर मुद्रणवसननिर्माणादिनानाविधयन्त्रकार्यनिर्वाहक स्वसबद्ध-तन्त्रीनिस्सृततेजोराजिविराजितराजेन्द्रमहासौध राजधानीनिखिलसौधा-खिलमार्ग धनिकजनभवन विविधविपणिविसर महाबलशैलाद्यनेकस्थान सदन प्रदर्श्य तदीय विषयमखिलमप्युपन्यस्य तत हारिण मन क्लेशहा-रिण जनसुखनिलय हॉर्डिज्वलय समुपेत्य त प्रति —

कञ्चित्कालमिहोपविश्य सुखतो विश्राम्य भोस्साम्प्रत
नून ते परिहारमेति सहसा सर्वोपि मार्गश्रम । 
यद्यप्येष उपासितु भगवतीं सन्ध्या सुकालस्तथा
प्यद्यैक दिवस सखे मम कृते सह्योऽतिपातस्त्वया ॥ ५५ ॥

इति वदन् तत्र कुत्रचिद्वेदिकाया तेन सहोपविश्य सानन्दमेव-माबभाषे —

एष खलु पुरा कदाचिदत्रागतस्य भारतचक्रवर्तिप्रतिनिधिभू-तस्य वैसराय् पदमलङ्कुर्वत श्रीमतो हार्डिञ् प्रभो स्मारकतया तन्ना-म्नाऽङ्कित एतन्महीशूरराजधानी वास्तव्य समस्तजनविश्रान्तिदेश अतिसन्निहितनिहितशुद्धविद्योतसहितहृद्यायतानेकवेदिकामनपरिशोभित असदृशकुसुमविसरविलसितविविधतरुलतापरिरञ्जितपरिसर हारमण्डला-यितस्वालङ्कारभूतनायकमहारत्नायमानमध्याविद्योतमानसमुन्नतवैद्युतमहादी-पस्तम्भविद्योतपरिरञ्जित वलय कलयति महामोदम् । अहो किमित्या-वेदयाम्यस्य माहात्म्यम् ।

यत पश्य –

सेवावृत्ति विधाय प्रतिदिवसमतिश्रान्ततामासवन्त
साय विश्रान्तिसौख्य सकुतुकमिह सम्प्राप्तुकामा अनेके ।
पश्चादालम्बयुक्तान्यतिविततया तत्रतत्रोपक्लृप्ता
न्येतान्यध्यास्य पीठान्यतिमृदुमधुर सलपन्तीष्टमित्रै ॥५६॥

मन्दो निर्मल एष सौरभयुत सौख्यावहो मारुत
विद्युच्छक्तिसमुद्भवा कृतमहाद्योता प्रदीपा इमे ।
एता रम्यवितर्दिकाश्च वितता अस्मत्कुटीरे कथ
लभ्येरन्निति कालमत्र नयते लोको महान्त मुदा ॥ ५७ ॥

अत्र खलु केचित्कवय —

ससारक्लेशचिन्तामितरकलकल रोदन चार्भकाणा
भार्याधिक्षेपवाच भवनमुपगतैस्साकमाभाषण च ।
सोढ्वा गेहे विधातु कृतिमतिललिता नैव साध्य किलेति
ज्ञात्वाऽत्रागत्य रात्राववहितमनसस्सत्प्रबन्धान् लिखन्ति ॥

अपिच—

रात्रौ विद्यार्थिलोकाश्चिरमिह वलये वेदिकासूपविष्टा
विद्याशालापरीक्षासमय उपगते दत्तचित्तावधाना ।
अत्युत्साहानुबन्धा करतलनिहितस्वस्वपाठ्यप्रबन्धा
सम्यक् तार पठन्त पाथिकजनमनस्तोषमुत्पादयन्ति ॥५९॥

अहो! अत्रकेवलमेव जनोपयोगाय वेदिकारचनमिति मा वेदी तत्रतत्र बहुषु प्रदेशेषु एवमेव रचिता अपरिमिता वेदिकास्समुल्लसन्ति ॥

तद्वचन निशम्य गोविन्दसूरिरेवमुवाच सखे ! यद्येव महानेवा-मोदो । मे यत —

पूर्व द्वारि वितर्दिके तत इत कुर्वन्त आसन् जन
स्थित्ये नाद्यतनास्तयोर्विरचन ह्यद्य विजानन्त्यहो ।
धन्य कृष्णमहीश्वरोऽपरिमिता देशे वितर्दीश्शुभा
सौख्यायैव जनस्य तावदकरोत् श्लाघ्य विशेषादिदम् ॥ ६०

ततश्श्रीनिवासकवि पुनरेवमभाणीत् सखे ! इद चावधेयम् ॥

कल्याणीतोडिभीलाम्बरिमहनमहाभैरवीमोहनाद्य
प्रोद्यद्रागावळीसकलितविविधसद्वृद्यवाद्योत्थरावम् ।
सशृण्वन् सानुराग परममधिगतो मानसोल्लासमास्ते
रम्ये स्थानेऽत्रचित्रे लिखित इव जन पारवश्येन युक्त. ॥

किंबहुना —

आकलितकालहरण षण्मुखयुक्तश्च शङ्करश्च महान् ।
राजति हार्डिञ्ज्वलय राजप्रिय एष शम्भुरिव ॥ ६२

इत पश्य सन्निहितमुपवनम् । पुरैतत् निरन्तरमहाफलपुष्प-नितान्तदन्तुरसन्तत तरुसन्ततिसशोभितमासीत् । महाप्रभुरत्रत्य स्वकीय महान्तमायमप्यविगणयन् प्रजानुकूल्यायैतन्मध्ये सचारयोग्य हृदयगम मार्गमेवमकारयत् । अद्याप्यतिहृद्यमेव विद्योतते किलेदमुद्यानम् । तथाहि—

समीपग प्रेक्षकलोकजालक मरुद्भिराराध्य सुशीतलैश्शुभै ।
अवाकिरन्त्योऽत्रलता प्रसूनकै प्रहर्षमुद्यानवने वितन्वते ॥ ६३

द्रष्टु धरातलमिद हृदयावतीर्णै
तारागणैरिव समुल्लसितै प्रसूनै ।

सशोभितं वनमिदं पवनाभिरामं
व्योमेव भाति शरदिन्दुमयूखरम्यम् ॥ ६४

मधुकरैर्मुखरीकृतदिक्कुलैरुपवनं त्विदमुल्लसति स्फुटम् ।
रुचिरमुज्ज्वलगानविशारदैरवनिपालसभाभवनं यथा ॥ ६५

शुकैः पिकैस्सुगायकैः प्रहर्षितैर्मधुव्रतैः
शुभस्वरैर्विभास्वरैर्मनोरमैर्विहङ्गमैः ।
सुनिर्मलोदकप्रपूरितोदरैस्सरोवरैः
विराजते विशेषतो वनं मनोविनोदनम् ॥ ६६

शुकशारिकामृदुवचोधुरन्धरं पिकपञ्चमाकलितगीतिबन्धुरम् ।
वनदेवतानवविहारमन्दिरं वनमेतदुल्लसति लोकसुन्दरम् ॥ ६७

दिवि किलफलदास्ते केवलं पञ्च वृक्षाः
इह तदपि परोक्षं वेत्ति कोवात्र मर्त्यः ।
ददति फलमसङ्ख्या पादपास्त्वत्र साक्षात्
शुभमुपवनमेतत्स्वर्गतोपि प्रशस्तम् ॥ ६८

उद्यद्वक्षोजकोका रुचिरपिकरवा भासमानाङ्गवल्ली
सैषा नानाविभूषा शुभमुखकमला लोचनेन्दीवराढ्या ।
राजत्सौरभ्यपुष्टा भ्रमरककलिता कापि लीलाभिरामा
रामेवारामलक्ष्मीर्विलसति नितरां लोकमानन्दयन्ती ॥ ६९

उमाकान्तस्तावन्ननु चिरमपर्णोपलसितः
रमाकान्तस्तावन्मधुरिपुरसावित्यभिहितः ।
सदापर्णैश्शोभामधिगतवतस्सन्मधुमुदः
कथं मे तुल्यौताविति खगरवैर्वक्त्युपवनम् ॥ ७०

अपिच—

तस्मिन्नेक ननु विलसित पुष्पक मय्यसङ्ख्य
सङ्ख्याहीन मयि वरमहापद्मकुन्दादिक च ।
पूर्णौपम्य स मम लभते तत्कथ यक्षराडि
त्यारामोऽय तमिह हसतीवाद्यपुष्पै प्रफुल्लै ॥ ७१

दिविस्थितिमत कथ नु कुजनाम तम्योचित
वय भुवि कुजा इति प्रविदिता किलेत्युच्छ्रिता ।
इमेऽत्र बहवोऽनभस्तलनिलीनमङ्गारक
समत्सरतया निहन्तुमभियान्ति नून द्रुमा ॥ ७२

ततस्तत्सर्वमवधार्य परमानन्दतुन्दिलम्म गोविन्दसूरि दक्षिण-
तोऽवलोक्य अये! अयमेव ननु चामुण्डाचल इति पृच्छतिस्म ॥

ततश्श्रीनिवासकविरेवमभ्यधत्त । सखे! बाढम्—

श्रीमत्कृष्णेन्द्रभूमीपतिकुलमणिना भक्तिभावेन देव्यै
क्लृप्ता नानाविराजन्मणिगणखचिता हारवल्लीव नित्यम् ।
रात्रौ दूरात्प्रदीपावळिरतिरुचिरा दृश्यते यत्र सोऽय
श्रीचामुण्डाद्रिरेना महिसुरनगरी भूषयन् भाति पश्य ॥ ७३

अयमेव चामुण्डाचल महाबलाचल इति च कीर्त्यते । यत —

महामनोविभावनासमन्विता ममाश्रिता
भजन्ति ये निरन्तर महाबलान्विधाय तान् ।
अवामि नन्विति स्वय महाबलाभिधा धरन्
महेश्वरो विभासते महीधरेऽत्र भास्वरे ॥ ७४

किंचैतत्पूर्वदिग्भागे—

रम्यो दूरत एव भूभृदिति सम्प्राप्ता प्रथा तां बहो
कालाद्भूमिभृतः प्रमार्ष्टुमनसा श्रीकृष्णभूमीभृता ।
लालित्ये परिकल्पिते बहुविधे सान्निध्यतोऽपि स्फुटं
रम्यश्श्रीललिताचलो विजयते नानाविलासोज्ज्वलः ॥ ७५

ततो गोविन्दसूरौ अहो! भवदुदीरितानने‌कान् विषयानवधार्या-तीव हृष्टोस्मि, अलमिदानीं प्रसक्तानुप्रसक्तैर्वचोभिः । श्वस्सावधानं साव-शेषानशेषान् विशेषान् विचारयिष्यामि । त्वरते सन्ध्यानुष्ठानाय सम्प्रति मे मनः इत्युक्तवति, श्रीनिवासकविस्तु यद्येवं याहि गृहं गच्छाव इत्यु-त्थाय ततः प्रस्थाय पथि सानन्दं तेन सह संलपन् तं सुहृन्मणिं चामराजेन्द्राग्रहारसन्निहितं स्वकीयं सदनं नीत्वा विविधैरुपचारैराद्रे ॥

गोविन्दसूरिस्सुहृदश्श्रीनिवासकवेरादरातिशयेन नितान्तं सतुष्टः स्नात्वा सन्ध्यामुपास्य परमेश्वरं प्रणिपत्य बहुधा संस्तुत्य कृताभ्यवहारः भक्तितस्तं भगवन्तं ध्यायन् सुखेन सुष्वाप ॥

**इति महीशूरपुरी सीतारामकविकृता**
**श्रीमहीशूरदेशाभ्युदये चम्पूप्रबन्धे**
**पूर्वोल्लासः**

(सशेषम्)

---

॥ श्री ॥

## श्रीमन्महाराज सस्कृतमहापाठशालानुबन्धिवृत्तान्तः

अत्र तावदस्या श्रीमन्महाराजसस्कृतमहापाठशालाया यथापूर्व-मस्मच्छ्रीमन्महाराजस्य श्रीकृष्णराजसार्वभौमस्य द्वाचत्वारिंशो जन्मदि-वसमहोत्सव २२-६-१९२६ तमदिने भक्त्यादरकृतज्ञतापुरस्सर प्रवर्तित । तस्मिन् समये आस्थानमहाविद्वास वे॥ होळवपल्ल्यभिजना पण्डितवर्या श्शेषाचार्या राजभक्तिविषयमधिकृत्य कञ्चन शास्त्रमर्यादानु-गुण विशेषाभिप्रायगर्भ विवेकमार्गोपदेशक उपन्यास कुर्वाणा अस्मच्छ्रीमन्महाराजेन श्रीकृष्णराजसार्वभौमेनास्मत्पाठशालाविषये परि-कल्पित सौकर्यातिशय च सुविशद विद्यार्थिनो विविच्य बोधयामासु ॥

ततश्च श्रीविद्यागणपतिस्वामिना नीराजनासमर्पणादिसकलपू-जाना निर्वर्तनादनन्तर सर्वे विद्वासो विद्यार्थिनश्च फलशर्करादिभि स्सन्तोषिता इति सामोदमावेदयाम ॥

---

अस्या च महापाठशालाया प्रायशोऽष्टभि वत्सरै अद्वैतवेदा-न्तप्रधानोपाध्यायस्थानमलङ्कृत्य बहूनन्तेवासिन पण्डितान् कृतवन्त महामहोपाध्याय, वेदान्तविशारदेत्यादिबिरुदविभूषिता वे॥ पञ्चापगेश शास्त्रिण कार्याद्विश्रान्ता इति निवेदनमतिविषादावहमपि कल्याणपुर्यां (वेङ्गळूरु) श्रीशङ्करमठमहापाठशालायामद्वैतवेदान्ताध्यापका महामहोपा-

ध्याय, विद्यानिध्यादिबिरुदविभूषिता वे॥ विरूपाक्षशास्त्रिण तत्पदमलङ्कृत्य न्यायवेदान्तशास्त्रपाठप्रवचने निरता वर्तन्ते इत्येतच्च विषाद किञ्चिदिव परिहरति ॥

---

अयमप्यपरोऽमोदावहो विषय , य एष —अस्मत्पाठशालाया साहित्यप्रधानोपाध्यायपदमधिगम्य विराजमाना कन्नबाड्यभिजना पण्डितवरा गोपालकृष्णशास्त्रिण श्रीमतोऽस्मन्महाराजस्य निरतिशयप्रीतिभाजनतामानीता महाविद्वत्पदरूपबहुमानेन सत्कृता । तथैवच साहित्याद्वैतवेदान्तप्रवचनपरा पण्डितवरा श्री॥ सक्कीघट्ट वेङ्कटाचार्या वे॥ पालघाट् नारायणशास्त्रिणश्च आस्थानविद्वद्गोष्ठ्या परिगणिता इति ॥

---

अयमपरोऽतितमा सकलजनाना प्रमोदावहो विषय —अस्मच्छ्रीमन्महाराजस्य श्रीकृष्णराजसार्वभौमस्य सविधे बहो कालात् अन्तरङ्गकार्यदर्शिस्थानमलकुर्वाणाना तत्कृपातिशयेनाधिगत महामात्यपदाना अमीन्-उल्-मुल्क उपाख्याना मिर्जामहम्मद् इस्मैल् नामधेयाना बि ए, ओ बि इ , सि ऐ ई , इत्याद्यनक बिरुदाङ्किताना महाशयाना आशीर्वादेनाभिनन्दनमुद्दिश्य तत्प्रापितसाहाय्यसम्पद्भि विद्वाद्भि विद्यार्थिभिश्च अस्यामेव पाठशालाया मिलिता काचन विद्वत्समिति । तत्र च विद्वद्वरैस्सकलिता गीर्वाण कर्णाटक भाषामया आशीर्वादमङ्गलश्लोका पठिता । तेभ्यश्चामात्यमहाशयेभ्य श्रीविद्यागणपतिस्वामिना आशीर्वादाक्षतपूर्वक प्रसादादिक समर्पितम् ॥

ते च अमात्यवर्या विद्वद्वरैर्विद्यार्थिभिश्च कृतमेतादृश सत्कार सादर मङ्गीकृत्य कृतज्ञताप्रदर्शनपुरस्सराभि आनन्दसूचिकाभि कारि-

ष्यमाणोपकारद्योतिकाभि काभिश्चन कार्णाटिकीभिरभिनन्दन सूक्तिभि सदस्यानानन्दयामासुरिति ॥

---

अथ च श्रीमन्महीशूरनगर्या प्रायशो वत्सराणामष्टविंशत्या प्राच्यकोशागारीय पण्डितस्थान मधिष्ठाय पश्चाच्चास्मत्पाठशालाया षट् सवत्सरान् ज्योतिश्शास्त्र प्रधानोपाध्याय पदमलकृत्य बहून् विद्यार्थिनो विदुष कृतवन्त ज्योतिषरत्नविरुदविभूषिता चामराजनगराभिजना पण्डितवरा नरहरिज्यौतिषिका स्वपदाद्विश्रान्ता इत्यनुत्साहमावेदयाम ॥

---

अस्या च महापाठशालाया श्रीमन्महीशूर सस्थान सस्कृत विद्वन्महासभया प्रचलिष्यमाणास्सर्वा अपि परीक्षा १९-१९२६ तमदिने प्रारभ्यन्ते ॥

### वेदशास्त्रपोषिणीसभा

अत्र खलु श्रीमन्महाराजेन श्रीकृष्णराज सार्वभौमेन सस्कृतमहापाठशालाया गीर्वाणभाषाभ्यासकुतूहलिना अनन्यसहायाना विद्यार्थिना भोजनादि साहायक परिकल्पितमस्ति । तथापीदानीं अभिवर्धमाना तादृशविद्यार्थिसख्यामवलोक्य तेषामपि केषाञ्चन वेदशास्त्रपिपठिषूणा बालकाना भोजनादिसाहाय्यपरिकल्पनमावश्यकमिति विचिन्त्य कैश्चिन्महाशयै वेदशास्त्रबद्धादराणा एतन्नगरनिवासिना देशान्तरनिवासिना च अनेकेषा आस्तिकाग्रेसराणा साहाय्यमपेक्षितम् । तदनुगुण चानेके महोदारा महाशया बहुलमुपकार कुर्वन्त कारयन्तश्च वर्तन्ते ॥

एतत्कार्यानुबन्धिनी "वेदशास्त्रपोषिणी" इत्यभिधाना काचन सभा परिकल्पिता । अस्याश्च म॥ रा॥ रा॥ श्री॥ राजशिल्पविशारद बिरुदा. बि सुब्रायवरा अध्यक्षपद, म॥ रा॥ रा॥ श्री॥ चक्रवर्ति रामानुजय्यगार्यवर्या कार्यदर्शिपद चालङ्कुर्वन्ति । सभा चैषा १९२३ तमे वर्षे एप्रिल् मासि दशमे दिवसे राजकार्यमूलस्थानसम्मुद्रिताऽप्यस्ति ।

ईदृश च महान्त प्रयत्न आकलयन् श्रीमान् महाराज श्रीकृष्ण-राजसार्वभौम स्वत स्वकीयराजकार्यमूलस्थानतश्च असदृश साहाय्य कुर्वन् कारयश्च कृपयाऽवलोकयति ॥

साम्प्रत चैतदर्थ विंशतिसहस्रसख्यापरिमितैर्थैस्सगृहीत । प्राय-श्चत्वारिंशत्सहस्रसख्यकरूप्यकाणा प्रदानप्रतिज्ञापत्रिकाश्च सगृहीता । अस्याश्च सभाया अवलम्बनेनेदानी त्रयो विद्यार्थिन परिपोष्यमाणा वर्तन्ते । न नाम केवलमस्यास्सभायास्समुद्देश विद्यार्थिना भोजना-दिसाहाय्यपरिकल्पनम्, अपितु तेषा परमपुराणसम्प्रदायाचारव्यवहारा-दिषु सम्यक् श्रद्धोत्साहादीना सहजीकरणम् । तस्मादेतादृश्या अद्भुत-तमायास्सभाया कृते सर्वेषामास्तिकमहाशयानाममोघमुपकार च सादर-मभ्यर्थयामहे ॥

---

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

# विषयसूचना

---





## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम —संस्कृतविद्याभिमानिन पुरुषप्रवरा. य कचन विषयमधिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकमित कस्याप्यनुद्वेगकर अचर्चितपूर्व कालदेशदशानुगुण प्रपञ्चोपकारकर धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकर प्रस्पष्टमुखविलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त, तेभ्यो महद्भ्य समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्या तमुपन्यास पारयाम प्रकाशयितुम् ॥

> यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
> परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
> न हीदृशं सवननं त्रिषु लोकेषु विद्यते ।
> दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक अग्रिम मूल्य -सार्धकरूप्यकं प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२ विद्यार्थिनां पुन एकरूप्यकम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा



"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतः समा"

(ईशोपनिषत्)

सपुट-२] अक्टोबर् १९२६ [सञ्चिका-४

तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारितकन्धराय गिरिजासङ्गैकशृङ्गारिणे ।
नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे
नागै कङ्कणिने नगेन गृहिणे नाथाय सेय नति ॥

## लो क त त्त्व म्

### विकासवाद

अथेदानीमिह वादिनस्त्रेधा समुपलभ्यन्ते व्यवहार सप्रदाय ससारादिपदाभिधेयस्य प्रपञ्चस्यास्य विकासवादिन सकोचवादिन यथास्थितिवादिनश्चेति । तत्राय विकासवाद —अस्मिन् जगति प्राक् बहो कालात् पशुपक्षिसहोदरा मनुजा क्रमश गृह ग्राम नगर देश, अन्न वस्त्र भूषण यान, भाषा लिपि पुस्तक पत्रिका,

काम अर्थं धर्मं मोक्ष, एवरीतीननन्तान् सुखोपायानसुखापायाश्च कल्पयन्त इदानीं पुन अतितमा जवेन वत्सराणा शतके शतके दशके दशके वा अतिविचित्रतराणि वस्तूनि अतिसूक्ष्मतराणि कौशलानि अत्यायतानि धर्मकार्याणि अतिमनोहराणि सुचारितानि प्रकाशयन्त सत्यकामा वैमानिका. सत्यसकल्पा सर्वनियन्तारश्च सन्त गन्धर्वा देवा सिद्धा सर्वेश्वरा वा बुभूषवः समुपलभ्यन्ते। इत उत्तरेण कालेन किमिव किमिव अद्भुतमनुभविष्याम इति महान्तमुत्साह वहन्त विचेष्टन्ते। सर्वेषा हृदि प्रत्यक्षमेवेति नात्राधिकमस्माभि' वक्तव्यमस्ति ॥

## सकोचवाद

अय पुनस्सकोचवाद —यथा यथा वर्तमाना अर्था अनुभूयन्ते भविष्यन्तोऽर्थाश्च मनोरथगोचरीक्रियन्ते पुरुषवरै, तथा तथा पूर्वमेवास्माक प्राचीनै पुरुषधौरेयैरनुभूता एव ते सर्वेऽप्यर्था, येषा स्वरूप स्वभाव सौन्दर्यं चमत्कार च परिच्छेत्तु नैव शक्नुवन्ति पापिनि कलौ काले समुपजातानामस्माक वाचो मनासि च। इदानीं पुनरस्मभ्य तादृक्षसामर्थ्यवैकल्यमुत्पादयन् काल कलिरय द्रुह्यति निष्करुण। किं कुर्मो वयम्? पुराकृत च कर्म्मातिलङ्घितु के वा प्रभवन्ति? "नाभुक्त क्षीयते कर्म कल्पकोटि शतैरापि" इति समाश्वसन्त यदृच्छोपनतैस्तुष्यद्भिर्वर्तितव्यमस्माभिरशेषैरित्युपदिशन्त महान्त परितुष्यन्तस्सन्ति ॥

तत्र बहुषु पुराणेषु बहुधा प्रपञ्चितस्यास्य कलिमाहिम्न सारांशोऽय विष्णुपुराणनिरूपित श्रूयता—ततश्चार्थ एवाभिजनहेतु। बलमेवाशेषधर्महेतु। अभिरुचिरेव दाम्पत्यसबन्धहेतु। स्त्रीत्वमेवो-

पभोगहेतु । अनृतमेव व्यवहारजयहेतु । उन्नताम्बुतैव पृथिवी-
हेतु । ब्रह्मसूत्रमेव विप्रत्वहेतु । रत्नधातुतैव श्लाघ्यताहेतु । लिङ्ग-
धारणमेवाश्रमहेतु । अन्याय एव वृत्तिहेतु । दौर्बल्यमेवावृत्तिहेतु ।
अभयप्रगल्भोच्चारणमेव पाण्डित्यहेतु । अनाढ्यतैव साधुत्वहेतु ।
स्नानमेव प्रसाधनहेतु । दानमेव धर्महेतु । सद्वेषधार्येव पात्रम् ।
दूरायतनोदकमेव तीर्थम् । कपटवेषधारणमेव महत्त्वम् । अल्पप्रसादा
बृहत्कोपाश्च प्रभव । एवमन्यत्र विस्तर ॥

अयमेव हि सृष्टिप्रलयप्रवाहवाद । इदानीं पुन प्रपञ्च
प्रलयोन्मुखावस्थाया वर्तते । यथाऽऽहु —न्यायशास्त्रविशारदा उद-
यनाचार्या [1]—पूर्वं हि मानस्य प्रजास्समभवन् । ततोऽपत्यैकप्रयो
जनसबन्धसभवा । तत कामावर्जनीयसन्निधिजन्मान । इदानीं
देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठा ॥

पूर्वं चरुप्रभृतिषु[2] सस्कारास्समाधायिषत । तत क्षेत्रप्रभृतिषु ।
ततो गर्भादित । इदानीं तु जातेषु लौकिकव्यवहारमाश्रित्य ।
पूर्वं सहस्रशाखो वेदोऽध्यगायि । ततो व्यस्त । ततष्षडङ्ग एक ।
इदानी तु क्वचिदेका शाखेति । पूर्वं ऋतवृत्तयो [3] ब्राह्मणा प्राद्यो-
तिषत । ततोऽमृतवृत्तय । ततश्च मृतवृत्तय । सप्रति प्रमृतसत्या-
नृतकुसीदपाशुपाल्यश्ववृत्तयो भूयास । पूर्वं दु स्वेन ब्राह्मणैरतिथयोऽ-
लभ्यन्त । तत क्षात्रियातिथयोऽपि सवृत्ता । ततो वैश्यावेशिन ।

[1] न्यायकुसुमाञ्जला २स्तबके

[2] विश्वामित्रपरशुरामजन्मवृत्ता त अभिसाहित

[3] ऋतमुञ्छसिल प्रोक्त अमृत स्यादयाचितम् ।
मृत तु याचित भैक्ष प्रमृत कर्षण स्मृतम् ॥
सत्यानृत तु वाणिज्य कुसीद वृद्धिजीवनम् ।
पाशुपाल्य च गोरक्षा श्ववृत्ति परिसेवनम् ॥

सम्प्रति शूद्रान्नभोजिनोऽपि। पूर्वम[1]मृतभुज। ततो विघसभुज। ततोन्नभुज। सम्प्रत्यघभुज ॥

पूर्वं चतुष्पाद्धर्म आसीत्। ततस्तनूयमाने तपसि त्रिपात्। ततो म्लायति ज्ञाने द्विपात्। सम्प्रति जीर्यति यज्ञे दानैकपात्। सोऽपि पाद दुरागतादिविपादिका[2]शतदु स्थः अश्रद्धामलकलङ्कित कामक्रोधादिकण्टकशतजर्झर प्रत्यहमपचीयमानवीर्यतया इतश्चेत स्खलन्निव उपलभ्यते। इत्यादि ॥

जन्मसंस्कारविद्यादे बुद्धे स्वाध्यायकर्मणो.।
ह्रासदर्शनतो ह्रासस्सम्प्रदायस्य[3] मीयताम् ॥

इति। कृत्स्नमपि पुराणजात एतादृशसृष्टिप्रलयप्रवाहप्रतिबोधनायैव प्रवृत्तम्। अत एव पुराणलक्षणमेव श्रूयते—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरित चेति पुराण पञ्चलक्षणम् ॥

इति। सर्ग सृष्टि प्रतिसर्ग प्रलय इत्यर्थ ॥

सकलमप्युपनिषज्जात जगत्कारणनिर्णयाय प्रवृत्त प्रलयमनूद्य सृष्टिमुपदिशति। तत पूर्वं सृष्टिसद्भावे हि प्रलयानुवादस्सगच्छते। ततश्चाय सृष्टिप्रलयप्रवाह अनादिरनन्तश्चेति बहव सिद्धान्तप्रवर्तका कथयन्ति। केचन पुन अनादि सान्त च प्रवाहमिच्छन्ति।

एतादृशस्यात्यन्तिकविलयस्य युक्तीर्महतीश्च कथयन्ति, कासाचिन्निदर्शनामिदम्—सूर्यचन्द्रादयोऽपि निर्वास्यन्ति तेजोमयत्वात्प्रदीपादि-

[1] स्वार्थंपक्व पुनरघ अन्न स्याद्भृत्यशेषत।
विघसोऽतिथिशेष. स्यात् अमृत यज्ञशेषत ॥
[2] पादरोग। [3] प्रपञ्चस्य।

वत्। पर्वता अपि चूर्णीभविष्यन्ति मृन्मयत्वात् भित्त्यादिवत्। समुद्रा अपि शोषमुपयास्यन्ति जलमयत्वात्तटाकादिवत्। इत्याद्या।

ततश्चास्मिन् वादे यद्यच्छुभमभिलष्यते तत्सर्वं प्रागेवासीदिति निश्चय। अत एवोक्त कृष्णद्वैपायनेन स्वमातर सत्यवतीं प्रति—

अतिक्रान्तसुखा काला प्रत्युपस्थितदारुणा।
श्व श्व पापिष्ठदिवसा पृथिवी गतयौवना॥

बहुमायासमाकीर्णं नानादोषसमाकुल।
लुप्तधर्मक्रियाचार घोर कालो भविष्यति॥[1]

इति। अत एवेदानींतना अबलागोपालप्रभृतयोऽपि निराबाध व्यवहरन्ति अतीत सर्वमपि साधु, असाधु च सर्वमप्यनागतमिति। इदमपि सर्वविदितामित्यलमियता॥

### यथास्थितिवाद

यथास्थितिवादिनामयमभिप्राय —प्रपञ्चोऽयमनादिव्यवहारसिद्ध अनन्तश्च। नच युगपत् सर्वोच्छित्ति सर्वसृष्टिर्वा प्रमाणपदवीमधिरोढुमर्हति। भपञ्जर मही महीधर सागरादय न केनचित्कल्पिता। नापि मनुष्या निरन्वयोत्पत्तिमन्तो निरन्वयविनाशवन्तश्च। निरन्वयोत्पत्तिविनाशावेतौ—

स निरन्वयनाशस्स्यात् धर्मो धर्म्यपि वा पुन।
पूर्वसघातभावो वा यद्भावे नानुवर्तते॥

उत्पत्तिश्च तथाभूता निरन्वयसमुद्भवा।
तावुभौ सर्वभावाना नियताविति सौगता॥

[1] महाभा॥ आदि॥ १२८ अ॥

इति । नैवंच भाषावेषभूषादयः कादाचित्काः । प्रादेशिकः संकोच-विकासौ सर्वत्र सर्वदाऽद्यवदेव परिदृश्यमानौ निरन्वयं विलयं प्रभवं वा न खलु प्रभवतः प्रतिपादयितुम् । नहि बीजप्रयोजनाभ्यां विना कस्यचिद्विनाशः कस्यचिदप्युत्पत्तिरस्ति ॥

कल्पयन्ति विना युक्त्या केचित्, मीमांसकैः पुनः ।
इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ॥

तत्तथैव स्वीक्रियते यद्यथैव प्रतीयते ।
उपलम्भानुसारेण व्यवस्थासिद्धिरीदृशी ॥

इति ॥

ननु सर्वेश्वरेण सर्वज्ञेन सर्वशक्तिना दयालुना विश्वमिदं सृष्ट-मिति श्रुतिस्मृतिप्रमुखं प्रमाणजातमस्तीत्युक्तमिति चेत्—

सत्यमुक्तं दुरुक्तं तत् विश्वस्य जगतो न हि ।
विद्यते कोऽपि निर्माता येनैवमपि कल्प्यते ॥

विचित्रसन्निवेशत्वयुक्त्या यदपि साधितम् ।
तत्रोच्यते त्रिधा भावा लौकिकैः परिलोकिताः ॥

प्रत्यक्षदृष्टकर्तारः केचिदेते घटादयः ।
अविद्यमाननिर्माणाः तथाऽन्ये गगनादयः ॥

संदिह्यमाननिर्माणाः केचिद्विश्वंभरादयः ।
एतेऽप्यकर्तृकास्सन्तु स्वभावादेव लाघवात् ॥

इति । तस्मादद्यवदेव अवनि जलधि महीधरादयः क्रमप्राप्तोपचयापचया न युगपदुदयविलयभागिनः ॥

विनाशीदं सर्वं जगत् अवयवित्वादिति यत्
बलीयः प्रत्यक्षप्रतिहतमुखत्वेन तदसत् ।
स एवायं विन्ध्यः दिवसकरबिम्बं च तदिदं
धरित्री सैवेति स्फुटमिह यतो धीरुदयते ॥

न कालः लोकशून्यः कालत्वात् इदानींतनकालवत् इत्यादिप्रत्यनुमानानामनन्तानां सत्त्वात् नास्ति आत्यन्तिकः प्रलयः, नापि पुनस्सर्वसृष्टिरिति ॥

नचेदृशप्रयोगेण घटादेरपि नित्यता ।
प्रसज्यते यतस्तत्र प्रत्यक्षौ भङ्गसंभवौ ॥

महत्त्वे सति स्पन्दमानत्वयुक्त्या जगज्जन्मभङ्गश्च यः प्रत्यपादि ।
स च प्रत्यभिज्ञाबलध्वस्तहेतुः न हृद्यत्वमद्य प्रपद्येत युक्त्या ॥

क्व वा देशे तिष्ठन् अनवरततृप्तः किमिति वा
कदा वा निश्शेषं जनयति तदेतत् विमृशतु ।
क्वचित्तिष्ठन् इष्टं किमपि फलमुद्दिश्य करणैः
कदाचिद्यत्किंचित् जनयति कुलालादिरखिलः ॥

कृतार्थत्वात्क्रीडा न हि भवति हेतुः यदि खलु
स्वभावः स्वातन्त्र्यं प्रकटितमहो संप्रति विभो ।
अभिप्रेतं किंचिद्यदयमसमीक्ष्यैव कुरुते
जगज्जन्मस्थेमप्रविलयमहायासमवशः ॥

अनुकम्पाप्रयुक्तेन सृज्यमानाश्च जन्तवः ।
सुखिनः किं न सृज्यन्ते तत्कर्मापेक्षका यदि ॥

तत स्वतन्त्रताहानि किं च तैरेव हेतुभि ।
उपपन्नेऽपि वैचित्र्ये कितत्कल्पनयाऽनया ॥

नातोऽस्ति तादृक्पुरुष जगन्निर्माणदक्षिण" ।
नान्यथानुपपत्तिश्च दृश्यतेऽपीह तादृशी ॥

इति ॥

तर्हीश्वरसद्भाववादिना श्रुतिस्मृतिपुराणादिवचसा कोऽभिप्राय इति चेत् श्रूयतामवधानेन—अवश्य च स्वाध्यायविध्यध्यापितस्य श्रुतिस्मृतिपुराणादे प्रयोजनवदर्थपरता वक्तव्या, तेन पुण्यपापात्मकदैवप्रभावकथनार्थोऽय सृष्टिप्रलयवाद —यथा समस्तपुरुषकाराभावेपि सृष्टिकाले दैववशेनैव सर्वे प्रवर्तते । प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमादेवोपरमते । तस्माद्धर्मानुष्ठान एव यतितव्यमित्येतत्पर सृष्टिप्रलयवचनमिति ॥

अत एव अनाद्यनन्तस्य सनातनस्य सततैकरूपस्य धर्मस्यापि सृष्टिराम्नायते तन्महिमप्रदर्शनार्थम्—वाजसनेयिब्राह्मणे सृष्टिप्रकरणे हि प्रजापतिमनुष्यादिपिपीलिकान्तप्राणिना चतुर्वर्णाभिमानिदेवताना च सृष्टिमाम्नायात्युग्रमपि क्षत्रियादिक नियन्तु समर्थस्य धर्मस्य सृष्टिरुच्यते—"स नैव व्यभवत् तच्छ्रेयो रूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्र यद्धर्मस्तस्मात्पर नास्ति ॥ इति (बृ उ ३–४–१४) ॥

तस्यायमर्थ —स प्रजापति मन्वादिरूपधारी जगत्स्रष्टा परमेश्वर प्रजास्सर्वास्सृष्ट्वापि तन्नियामकाभावात् कृतकृत्यतारूप विभव नैव प्राप्तवान् । ततो विचार्य नियामकत्वेन श्रेष्ठ धर्मं अतिप्रयासेन असृजदिति । अहो महदिद धर्मस्य सामर्थ्य, यत् क्षत्रियादिरुग्र मारणादौ समर्थोऽपि धर्मात् भीत करप्रदानाद्यनुपयोगिन दीन दरिद्र

॥ श्री ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा



" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समा "

(ईशोपनिषत्)

सपुट-२] अक्टोबर् १९२६ [सञ्चिका-४

तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारितकन्धराय गिरिजासङ्गैकशृङ्गारिणे ।
नद्या शेखरिणे दृशा तिलकिने नारायणेनाशिणे
नागै कङ्कणिने नगेन गृहिणे नाथाय सेय नति ॥

## लोकतत्त्वम्

### विकासवाद

अथेदानीमिह वादिनस्त्रेधा समुपलभ्यन्ते व्यवहार सप्रदाय ससारादिपदाभिधेयस्य प्रपञ्चस्यास्य विकासवादिन सकोचवादिन यथास्थितिवादिनश्चेति । तत्राय विकासवाद —अस्मिन् जगति प्राक् बहो कालात् पशुपक्षिसहोदरा मनुजा क्रमश गृह ग्राम नगर देश, अन्न वस्त्र भूषण यान, भाषा लिपि पुस्तक पत्रिका,

काम अर्थं धर्मं मोक्ष, एवरीतीननन्तान् सुखोपायानसुखापायाश्च कल्पयन्त इदानीं पुन अतितमा जवेन वत्सराणा शतके शतके दशके दशके वा अतिविचित्रतराणि वस्तूनि अतिसूक्ष्मतराणि कौशलानि अत्यायतानि धर्मकार्याणि अतिमनोहराणि सुचारितानि प्रकाशयन्त सत्यकामा वैमानिका सत्यसकल्पा सर्वनियन्तारश्च सन्त गन्धर्वा देवा सिद्धा सर्वेश्वरा वा बुभूषवः समुपलभ्यन्ते। इत उत्तरेण कालेन किमिव किमिव अद्भुतमनुभविष्याम इति महान्तमुत्साह वहन्त विचेष्टन्ते। सर्वेषा हृदि प्रत्यक्षमेवेति नात्राधिकमस्माभि वक्तव्यमस्ति ॥

## सकोचवाद

अथ पुनस्सकोचवाद.—यथा यथा वर्तमाना अर्था अनुभूयन्ते भविष्यन्तोऽर्थाश्च मनोरथगोचरीक्रियन्ते पुरुषवरै, तथा तथा पूर्वमेवास्माक प्राचीनै पुरुषधौरेयैरनुभूता एव ते सर्वेऽप्यर्था, येषा स्वरूप स्वभाव सौन्दर्यं चमत्कार च परिच्छेत्तु नैव शक्नुवन्ति पापिनि कलौ काले समुपजातानामस्माक वाचो मनासि च। इदानीं पुनरस्मभ्य तादृक्षसामर्थ्यवैकल्यमुत्पादयन् काल कलिरय द्रुह्यति निष्करुण। किं कुर्मो वयम्? पुराकृत च कर्मातिलङ्घितु के वा प्रभवन्ति? "नाभुक्त क्षीयते कर्म कल्पकोटिशतैरपि" इति समाश्वसन्त यदृच्छोपनतैस्तुष्यद्भिर्वर्तितव्यमस्माभिरशेषैरित्युपदिशन्त महान्त परितुष्यन्तस्सन्ति ॥

तत्र बहुषु पुराणेषु बहुधा प्रपञ्चितस्यास्य कलिमाहिम्न साराशोऽय विष्णुपुराणनिरूपित श्रूयता—ततश्चार्थ एवाभिजनहेतु। बलमेवाशेषधर्महेतु। अभिरुचिरेव दाम्पत्यसबन्धहेतु। स्त्रीत्वमेवो-

पभोगहेतु । अनृतमेव व्यवहारजयहेतु । उन्नताम्बुतैव पृथिवी-हेतु । ब्रह्मसूत्रमेव विप्रत्वहेतु । रत्नधातुतैव श्लाघ्यताहेतु । लिङ्ग-धारणमेवाश्रमहेतु । अन्याय एव वृत्तिहेतु । दौर्बल्यमेवावृत्तिहेतु । अभयप्रगल्भोच्चारणमेव पाण्डित्यहेतु । अनाढ्यतैव साधुत्वहेतु । स्नानमेव प्रसाधनहेतु । दानमेव धर्महेतु । सद्वेषधायेव पात्रम् । दूरायतनोदकमेव तीर्थम् । कपटवेषधारणमेव महत्त्वम् । अल्पप्रसादा बृहत्कोपाश्च प्रभव । एवमन्यत्र विस्तर ॥

अयमेव हि, सृष्टिप्रलयप्रवाहवाद । इदानीं पुन प्रपञ्च प्रलयोन्मुखावस्थाया वर्तते । यथाऽऽहु —न्यायशास्त्रविशारदा उद-यनाचार्या[1]—पूर्वं हि मानस्य प्रजास्समभवन् । ततोऽपत्यैकप्रयो जनसबन्धसभवा । तत कामावर्जनीयसान्निधिजन्मान । इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठा ॥

पूर्वं चरुप्रभृतिषु[2] सस्कारास्समाधायिषत । तत क्षेत्रप्रभृतिषु । ततो गर्भादित । इदानीं तु जातेषु लौकिकव्यवहारमाश्रित्य । पूर्वं सहस्रशाखो वेदोऽध्यगायि । ततो व्यस्त । ततष्षडङ्ग एक । इदानीं तु क्वचिदेका शाखेति । पूर्वं ऋतवृत्तयो[3] ब्राह्मणा प्राद्यो-तिषत । ततोऽमृतवृत्तय । ततश्च मृतवृत्तय । सप्रति प्रमृतसत्या-नृतकुसीदपाशुपाल्यश्ववृत्तयो भूयास । पूर्वं तु खेन ब्राह्मणैरतिथयोऽ-लभ्यन्त । तत क्षत्रियातिथयोऽपि सवृत्ता । ततो वैश्यावेशिन ।

---

[1] न्यायकुसुमाञ्जला २स्तबके

[2] विश्वामित्रपरशुरामजन्मवृत्ता त अभिसहित

[3] ऋतमुञ्छशिल प्रोक्त अमृत स्यादयाचितम् ।
मृत तु याचित भैक्ष प्रमृत कर्षण स्मृतम् ॥
सत्यानृत तु वाणिज्य कुसीद वृद्धिजीवनम् ।
पाशुपाल्य च गोरक्षा श्ववृत्ति परिसेवनम् ॥

सम्प्रति शूद्रान्नभोजिनोऽपि । पूर्वम[1]मृतभुज । ततो विघसभुज । ततोऽन्नभुज । सम्प्रत्यघभुज ॥

पूर्वं चतुष्पाद्धर्म आसीत् । ततस्तनूयमाने तपसि त्रिपात् । ततो म्लायति ज्ञाने द्विपात् । सम्प्रति जीर्यति यज्ञे दानैकपात् । सोऽपि पाद दुरागतादिविपादिका[2]शतदु स्थः अश्रद्धामलकलङ्कित कामक्रोधादिकण्टकशतजर्झर प्रत्यहमपचीयमानवीर्यतया इतश्चेत स्खलन्निव उपलभ्यते । इत्यादि ॥

जन्मसंस्कारविद्यादे बुद्धे स्वाध्यायकर्मणो ।
ह्रासदर्शनतो ह्रासस्सम्प्रदायस्य[3] मीयताम् ॥

इति । कृत्स्नमपि पुराणजात एतादृशसृष्टिप्रलयप्रवाहप्रतिबोधनायैव प्रवृत्तम् । अत एव पुराणलक्षणमेव श्रूयते—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराण पञ्चलक्षणम् ॥

इति । सर्ग सृष्टि प्रतिसर्ग प्रलय इत्यर्थ ॥

सकलमप्युपनिषज्जात जगत्कारणनिर्णयाय प्रवृत्त प्रलयमनूद्य सृष्टिमुपदिशति । तत पूर्वं सृष्टिसद्भावे हि प्रलयानुवादस्सगच्छते । ततश्चाय सृष्टिप्रलयप्रवाह अनादिरनन्तश्चेति बहव सिद्धान्तप्रवर्तका कथयन्ति । केचन पुन अनादिं सान्त च प्रवाहमिच्छन्ति ।

एतादृशस्यात्यन्तिकविलयस्य युक्तीर्महतीश्च कथयन्ति, कासाचिन्निदर्शनामिदम्—सूर्यचन्द्रादयोऽपि निर्वास्यन्ति तेजोमयत्वात्प्रदीपादि-

[1] स्वार्थंपक्व पुनरघ अन्न स्याद्भृत्यशेषत ।
विघसोऽतिथिशेष स्यात् अमृत यज्ञशेषत ॥

[2] पादरोग । [3] प्रपञ्चस्य ।

वत्। पर्वता अपि चूर्णीभविष्यन्ति मृन्मयत्वात् भित्त्यादिवत्। समुद्रा अपि शोषमुपयास्यन्ति जलमयत्वात्तटाकादिवत्। इत्याद्या।

ततश्चास्मिन् वादे यद्यच्छुभमभिलष्यते तत्सर्वं प्रागेवासीदिति निश्चय। अत एवोक्त कृष्णद्वैपायनेन स्वमातर सत्यवतीं प्रति—

अतिक्रान्तसुखा काला प्रत्युपस्थितदारुणा।
श्व श्व पापिष्ठदिवसा पृथिवी गतयौवना॥

बहुमायासमाकीर्ण नानादोषसमाकुल।
लुप्तधर्मक्रियाचार घोर कालो भविष्यति॥ [1]

इति। अत एवेदानींतना अबलागोपालप्रभृतयोऽपि निराबाध व्यवहरन्ति अतीत सर्वमपि साधु, असाधु च सर्वमप्यनागतमिति। इदमपि सर्वविदितामित्यलमियता॥

## यथास्थितिवाद

यथास्थितिवादिनामयमभिप्राय —प्रपञ्चोऽयमनादिव्यवहारसिद्ध अनन्तश्च। नच युगपत् सर्वोच्छित्ति सर्वसृष्टिर्वा प्रमाणपदवीमधिरोढुमर्हति। भपञ्जर मही महीधर सागरादय न केनचित्कल्पिता। नापि मनुष्या निरन्वयोत्पत्तिमन्तो निरन्वयविनाशवन्तश्च। निरन्वयोत्पत्तिविनाशावेतौ—

स निरन्वयनाशस्स्यात् धर्मो धर्म्यपि वा पुन।
पूर्वसघातभावो वा यद्भावे नानुवर्तते॥

उत्पत्तिश्च तथाभूता निरन्वयसमुद्भवा।
तावुभौ सर्वभावाना नियताविति सौगता॥

[1] महाभा॥ आदि॥ १२८ अ॥

इति। नैवच भाषावेषभूषादय कादाचित्काः। प्रादेशिक सकोच-विकासौ सर्वत्र सर्वदाऽद्यवदेव परिदृश्यमानौ निरन्वय विलय प्रभव वा न खलु प्रभवत प्रतिपादयितुम्। नहि बीजप्रयोजनाभ्या विना कस्यचिद्विनाश कस्यचिदप्युत्पत्तिरस्ति ॥

कल्पयन्ति विना युक्त्या केचित्, मीमासकैः पुन ।
इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ॥

तत्तथैव स्वीक्रियते यद्यथैव प्रतीयते ।
उपलम्भानुसारेण व्यवस्थासिद्धिरीदृशी ॥

इति ॥

ननु सर्वेश्वरेण सर्वज्ञेन सर्वशक्तिना दयालुना विश्वमिद सृष्ट-मिति श्रुतिस्मृतिप्रमुख प्रमाणजातमस्तीत्युक्तमिति चेत्—

सत्यमुक्त दुरुक्त तत् विश्वस्य जगतो न हि ।
विद्यते कोऽपि निर्माता येनैवमपि कल्प्यते ॥

विचित्रसन्निवेशत्वयुक्त्या यदपि साधितम् ।
तत्रोच्यते त्रिधा भावा लौकिकै परिलोकिता ॥

प्रत्यक्षदृष्टकर्तार केचिदेते घटादय ।
अविद्यमाननिर्माणा तथाऽन्ये गगनादय ॥

सदिह्यमाननिर्माणा· केचिद्विश्वभरादय ।
एतेऽप्यकर्तृकास्सन्तु स्वभावादेव लाघवात् ॥

इति। तस्माद्यवदेव अवनि जलधि महीधरादय· क्रमप्राप्तोपचयापचया न युगपदुदयविलयभागिन ॥

विनाशीदं सर्वं जगत् अवयवित्वादिति यत्
बलीयः प्रत्यक्षप्रतिहतमुखत्वेन तदसत् ।
स एवायं विन्ध्यः दिवसकरबिम्बं च तदिदं
धरित्री सैवेति स्फुटमिह यतो धीरुदयते ॥

न कालः लोकशून्यः कालत्वात् इदानींतनकालवत् इत्यादिप्रत्यनुमानानामनन्तानां सत्त्वात् नास्ति आत्यन्तिकः प्रलयः, नापि पुनस्सर्वसृष्टिरिति ॥

नचेदृशप्रयोगेण घटादेरपि नित्यता ।
प्रसज्यते यतस्तत्र प्रत्यक्षौ भङ्गसंभवौ ॥

महत्त्वे सति स्पन्दमानत्वयुक्त्या जगज्जन्मभङ्गश्च यः प्रत्यपादि ।
स च प्रत्यभिज्ञाबलध्वस्तहेतुः न हृद्यत्वमद्य प्रपद्येत युक्त्या ॥

क्व वा देशे तिष्ठन् अनवरततृप्तः किमिति वा
कदा वा निश्शेषं जनयति तदेतत् विमृशतु ।
क्वचित्तिष्ठन् इष्टं किमपि फलमुद्दिश्य करणैः
कदाचिद्यत्किंचित् जनयति कुलालादिरखिलः ॥

कृतार्थत्वात्क्रीडा न हि भवति हेतुः यदि खलु
स्वभावः स्वातन्त्र्यं प्रकटितमहो संप्रति विभो ।
अभिप्रेतं किंचिद्यदयमसमीक्ष्यैव कुरुते
जगज्जन्मस्थेमप्रविलयमहायासमवशः ॥

अनुकम्पाप्रयुक्तेन सृज्यमानाश्च जन्तवः ।
सुखिनः किं न सृज्यन्ते तत्कर्मापेक्षका यदि ॥

तत स्वतन्त्रताहानि किं च तैरेव हेतुभि ।
उपपन्नेऽपि वैचित्र्ये कितत्कल्पनयाऽनया ॥

नातोऽस्ति तादृक्पुरुष जगन्निर्माणदक्षिण ।
नान्यथानुपपत्तिश्च दृश्यतेऽपीह तादृशी ॥

इति ॥

तर्हीश्वरसद्भाववादिना श्रुतिस्मृतिपुराणादिवचसा कोऽभिप्राय इति चेत् श्रूयतामवधानेन—अवश्य च स्वाध्यायविध्यध्यापितस्य श्रुतिस्मृतिपुराणादे प्रयोजनवदर्थपरता वक्तव्या, तेन पुण्यपापात्मकदैवप्रभावकथनार्थोऽय सृष्टिप्रलयवाद—यथा समस्तपुरुषकाराभावेपि सृष्टिकाले दैववशेनैव सर्वं प्रवर्तते। प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमादेवोपरमते। तस्माद्धर्मानुष्ठान एव यतितव्यमित्येतत्पर सृष्टिप्रलयवचनामिति ॥

अत एव अनाद्यनन्तस्य सनातनस्य सततैकरूपस्य धर्मस्यापि सृष्टिराम्नायते तन्महिमप्रदर्शनार्थम्—वाजसनेयिब्राह्मणे सृष्टिप्रकरणे हि प्रजापतिमनुष्यादिपिपीलिकान्तप्राणिना चतुर्वर्णाभिमानिदेवताना च सृष्टिमाम्नायात्युग्रमपि क्षत्रियादिक नियन्तु समर्थस्य धर्मस्य सृष्टिरुच्यते—"स नैव व्यभवत् तच्छ्रेयो रूपमत्यसृजत धर्म तदेतत् क्षत्रस्य क्षत्र यद्धर्मस्तस्मात्पर नास्ति ॥ इति (बृ उ ३–४–१४) ॥

तस्यायमर्थ—स प्रजापति मन्वादिरूपधारी जगत्स्रष्टा परमेश्वर प्रजास्सर्वास्सृष्ट्वापि तन्नियामकाभावात् कृतकृत्यतारूप विभव नैव प्राप्तवान्। ततो विचार्य नियामकत्वेन श्रेष्ठ धर्म अतिप्रयासेन असृजदिति। अहो महदिद धर्मस्य सामर्थ्यं, यत क्षत्रियादिरुग्र मारणादौ समर्थोऽपि धर्मात् भीत करप्रदानाद्यनुपयोगिन दीन दरिद्र

याचक न ताडयति प्रत्युत तस्मै धन ददाति । भटाश्चातिशूरा नळिकाखड्गादिधारिण लक्षसख्याका एकेन निरायुधेन विक्षिप्यमाणास्ताड्यमानास्सन्तोऽपि स्वामिद्रोहात्पापाद्बिभ्यति । ततो धर्मादुत्कृष्ट लोकमर्यादाव्यवस्थापक न किंचिदस्तीति । तस्मादेव "धर्मो विश्वस्य जगत प्रतिष्ठा" इत्यनुश्रूयत इति ॥

तस्मात् श्रुतिस्मृतीतिहासपुराणादिक सकलमपि शास्त्र धर्मानुष्ठाने श्रद्धाजननाय पुरुषकारापेक्षया दैवप्राबल्य प्रतिबोधनायैव प्रवृत्त, उपाख्यानेषु च नातीवादर कर्तव्य इति मीमासकाना सिद्धान्त । ततश्च सकलोपिजगद्व्यापार धर्मशक्त्यैव प्रवर्तन इत्यनादिरनन्तश्चेति[1] ॥

## देवताविचार

अत्रेदमेकमुदाहरणम्—न केवलमेते मीमासका सर्वेश्वर सर्वज्ञ नाभ्युपगच्छन्ति । अपितर्हि इन्द्रादीनपि देवान् सचेतनान् सानुग्रहान् विग्रहादिपञ्चकसाहितान् नाभ्युपगच्छन्ति । यदाहु —

विग्रहो हविरादान युगपत्कर्मसन्निधि ।
तृप्ति फलप्रदान च देवताना न विद्यते ॥

इति । देवताना शरीरलक्षणा मूर्तिर्नास्ति । तदभावादेव युगपत् कर्मानुष्ठानदेशेषु बहुषु सन्निधिलक्षणा गतिर्नास्ति । तदुद्देशेन त्यक्तस्य हविरादे स्वीकारलक्षणा भुक्तिर्नास्ति । तेन तृप्तिरपि नास्ति । ततश्च फलप्रदातृत्वलक्षणा शक्ति अनुग्रहपूर्विकाऽपि नास्ति । किंतु "इन्द्राय, अग्नये" इत्यादिरूप चतुर्थीविभक्त्यन्त अचेतन शब्द एव देवता । तदेव च शब्दस्वरूप तत्तत्पदस्यार्थ । त्यज्यमानहविरुद्देश्य-

[1] तन्त्रवार्तिकं १६ पु

त्वमेव देवतात्वम् । तादृशेन्द्रादीनुद्दिश्य कृत एव त्याग वह्न्यादौ दाहानुकूलौष्ण्यादिशक्तिवत् गङ्गास्नानपञ्चगव्यप्राशनादौ पापहरणशक्तिवत् स्वशक्त्यैव स्वाभाविक्या स्वर्गादिक जनयतीति । अयमेव हि प्राय स्वभाववाद ॥

एतत्सिद्धान्तकटाक्षेणैव भगवान् वासुदेव अर्जुनायेत्थमुपादिक्षत्—

मयि सर्वमिद प्रोत सूत्रे मणिगणा इव ।
अह हि सर्वयज्ञाना भोक्ता च प्रभुरेव च ॥

इति । मया विना तृणाग्रमपि न चलति । अहमेव सर्वकर्मसमाराध्य सर्वफलप्रदश्चेत्यर्थ ॥

इममेव च वाद शारीरकभाष्येऽप्येव प्रत्यब्रुवन् भगवत्पादा — यथा—न च शब्दमात्र अर्थस्वरूप सभवति । शब्दार्थयोर्भेदात् । तत्र यादृश मन्त्रार्थवादयोरिन्द्रादीना स्वरूपमवगत न तत्तादृश शब्दप्रमाणकेन प्रत्याख्यातु युक्तम् । इतिहासपुराणमपि व्याख्यातेन रूपेण सभवन्मन्त्रार्थवादमूलत्वात् प्रभवति देवताविग्रहादि साधयितुम् । प्रत्यक्षादिमूलमपि सभवति । भवति ह्यस्माकमप्रत्यक्षमपि चिरतनाना प्रत्यक्षम् । तथा च व्यासादय देवादिभि प्रत्यक्ष व्यवहरन्तीति स्मर्यते ॥

यस्तु ब्रूयादिदानींतनानामिव पूर्वेषामपि नास्तिदेवादिभिर्व्यवहर्तुं सामर्थ्यमिति[1] । स जगद्वैचित्र्य प्रतिषेधेत् । इदानीमिव च नान्यदापि सार्वभौम क्षत्रियोऽस्तीति ब्रूयात् । ततश्च राजसूयादि चोदनोपरुन्ध्यात् । इदानींमिव च कालान्तरेऽपि अव्यवस्थितप्रायान्

[1] श्लोकवार्तिक, 75 पु ॥

वर्णाश्रमधर्मान् प्रतिजानीत । ततश्च व्यवस्थाविधायि शास्त्रमनर्थक स्यात् । तस्माद्धर्मोत्कर्षवशात् चिरतना देवादिभि प्रत्यक्ष व्यवजह्रुरिति श्लिष्यते ॥

अपि च स्मरन्ति—"स्वाध्यायादिष्टदेवतासप्रयोग" इत्यादि । योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफल स्मर्यमाण न शक्यते साहसमात्रेण प्रत्याख्यातुम् । श्रुतिश्च योगमाहात्म्य प्रख्यापयति—"न तस्य रोगो न जरा न मृत्यु प्राप्तस्य योगाग्निमय शरीरम्" इति ॥ ऋषीणामपि मन्त्रब्राह्मणदर्शिना सामर्थ्य नास्मदीयेन सामर्थ्येन उपमातु युक्तम् । तस्मात्समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति सभवे निरालम्बनाऽध्यवसातु युक्ता । तस्मादुपपन्न मन्त्रादिभ्य देवादीना विग्रहवत्त्वाद्यवगम इति ॥

एववादिष्वप्येतेषु—

सर्वदा चापि पुरुषा प्रायेणानृतवादिन ।
यथाऽद्यत्वे न विस्रम्भ तथाऽतीतार्थकीर्तने [1] ॥

न च पुवचन सर्व सत्यत्वेनावगम्यते ।
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी [2] ॥

---

इति हि श्रूयते श्लोकवार्तिके तन्त्रवार्तिके ।
कुमारिलमहाप्राज्ञमुखाल्लोकोत्तर वच ॥

इति ॥ इत्थमपि वाद वेदापौरुषेयत्वसाधनसभ्रमपरवशहृदयाना महतामपि स्वभाव इति मर्षणीयो मादृशामिति मन्यामह इत्यन्यत्रप्रपञ्च ॥ (सपादक)

---

[1] श्लोकवा ॥ 88 पु ॥ [2] तन्त्रवा ॥ 178 पु ॥

# भाषातन्त्रम्.

## पीठिका

यथा जनास्तथा जनाना भाषा अपि विधात्रैव सृष्टा इति पुरातनाना विदुषा सिद्धान्त ।

नाम रूप च भूताना कृत्याना च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीना चकार स॰ ॥

(विष्णुपुराणम् I 5, 63)

स विष्णुरित्यर्थ ॥

सर्वेषा तु स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्सस्थाश्च निर्ममे ॥

(मनुस्मृति I 21)

अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतस्सर्वा प्रसूतय ॥

(महाभारत शान्ति अध्या 231, 56)

न प्राणिन न वा जना नापि शब्दा नापि वा क्रियाकारकान्वितपदकदम्बात्मिका भाषा विधातृकल्पिता , किं तु जगत्परिणामक्रमसिद्धा इत्यधुनातना पाश्चात्याविपश्चितस्सप्रमाण निगदन्ति । सचेतनपरिणामोऽचेतनपरिणाम इति परिणामो द्विधा । आ चक्षुरगोचरात्क्रिमेरा



श्रीमन्महाराज श्री कृष्णराजेन्द्र ओडेयर बहद्दूर
जि.सि.एम्.ऐ., जि.बि.इ.

To face page 168.

च मनुष्यात् यावत्य प्राणिजातयो वर्तन्ते तास्सर्वा क्रमेण पूर्वपूर्वावस्था स्वननुकूलान्यनुपयुक्तानि चाङ्गान्युत्तरोत्तरावस्थासु स्वय क्षयोन्मुखानि कुर्वाणा स्वयोगक्षेमायानुकूलानि तु पुन पुनरुपयुञ्जन्त्योऽन्ते निजरूपावयवाकारेषु अन्यथा परिणता भूत्वा पशुपक्षिमृगमनुष्याकारान् प्रपद्यन्ते। अचेतनमपि क्वचिच्चेतनप्रेरणा विना क्वचिच्चेतनप्रेरणाधीनव्यापारेण रूपाकारावयवेष्वन्यथैव क्रमात्परिणमन्ति। तथा परिणतेषु वस्तुषु भाषाऽप्येक परिणामनिदर्शनमिति पाश्चात्यविद्वद्भिर्भाषातन्त्रे स प्रपञ्च जिज्ञासितम्। यत्र शास्त्रे भाषोत्पत्तिस्थितिलया जिज्ञास्यन्ते तद्भाषातन्त्रमित्यत्र व्यवह्रियते।

## भाषाभेद

भाषा द्विविधा वर्तते अव्यक्ता व्यक्ता चेति। अव्यक्ता तु आभ्यन्तरा परा पश्यन्ती मध्यमेति त्रिधा पुरातनैरार्यविद्वद्भिर्विभक्ता विद्यते। या पुनरव्यक्तवर्णा वर्णकदम्बात्मकपदोच्चारणाद्वैखरीनामकात्प्राक् सूक्ष्मावस्था वर्तते सा परेत्युच्यते। या पुनस्तत्तद्वर्णव्यञ्जनाय तदनुकूलस्थानप्रयत्नान्निरीक्षमाणाऽन्तरेव प्रसरति सा पश्यन्तीत्युच्यते। या पुनर्वर्णव्यक्ते प्रागीषद्विकासरमणीया सा मध्यमेत्याख्यायते। एतादृशाभ्यन्तरवाग्विकाससहकारिणा कारणाना समविषमभाववशात् व्यक्तवैखरीवाग्विकासे सौष्ठवासौष्ठवदोषा स्वरव्यञ्जनव्यत्ययविपर्यासविनिमयाश्च प्रायेण जायन्ते। बाला खलु तात तादेति आत्मान अत्तेत्यप्पेति वा वदन्ति। तदित्थ भाषाया शारीरदोषा बुद्धिदोषाश्च प्रसरन्तीति बाढ वक्तु शक्यते॥

आभ्यन्तरभाषाजनककारणानि देशकालाहारादिभेदवशात्प्रतिजन भिद्यन्ते। कारणभेदात्कार्यभेदो जायते। यत्केचन दन्त्य सकार-

मुच्चारयितुमशक्तास्तालव्य शकारमेवोच्चरन्ति । तत्राभ्यन्तरभाषाजनक-कारणेष्वन्यतमवैषम्यमेव कारणमिति न कोऽपि सन्देग्धि ।

### भाषोत्पत्ति

भाषोत्पत्तौ सङ्केतोऽनुकरण कामक्रोधभयहर्षादिभावानुभवकाले स्वयमनुभवितृमुखाद्बहिर्निस्सरन्तश्च शब्दा निदानमिति सयुक्तिक शक्यते प्रतिपादयितुम्—अजेनाखादिता लता जना अजत्यक्ता लतेति वदन्ति अतोऽस्या लताया अजत्यक्तेति (आडुमुट्टद गिड)नाम सङ्केतित भवति । 'का' 'का' इति शब्द कुर्वता वायसाना तद्ध्वन्यनुकृतिरूप काक इत्येव नाम कृत दृश्यते हर्षाद्धसता जनाना वदनाद्धस् हस् इति निस्सरन्त शब्द श्रुत्वा हासस्य हास इत्येव नाम कृत दृश्यते । तदित्थ वस्त्वाकाररूपगुणाद्यन्यतमार्थबोधकाश्शब्दा अनुकरणशब्दा तत्तद्वस्तुगुणक्रियासन्दर्शनजाताना कामक्रोधभयहर्षादीना द्योतकाश्च शब्दा भाषाया मूलमिति सिद्धान्त ॥

तादित्थ सञ्जाताश्शब्दा प्रथम केवल वस्तुद्योतका गुणबोधका क्रियावाचिनश्च अवर्तन्त। कालक्रमेण युष्मदस्मद्भ्यामिद्धिस्थार्थबोधकाश्शब्दा 'त्वम्' अहम्, 'स' इति 'त्वत्' मत्, 'तत्' इति वा अङ्गाभिनयसमकालमुच्चारिता मध्यमोत्तमप्रथमपुरुषार्थेषु रूढास्समभवन् । यदैते पुरुषभेदबोधकाश्शब्दा समजायन्त तदा पुरुषभेदेन क्रियाभेदद्योतनाय प्रवृत्तिरुदभवत् । यदा प्रथमपुरुषसस्य गमनक्रियाया द्योतनेप्सा जाता तदा तच्छब्द 'ति' इति कृत्वा गमनार्थकयाधातुना साक, या+ति इत्युच्चारित 'स गच्छति' इत्यर्थे कृतप्रयोग आसीत् गच्छतीत्यस्य तद्गमनमित्येवार्थ । एव कुरु+ध्वम् इत्यत्र ध्वशब्द त्वम्शब्दान्नान्य कुरुध्वमित्यस्य त्वत्करणमित्येवार्थ ।पश्यामीत्यत्रापि मिशब्दोऽस्मच्छब्दविकार एव।पश्या-

मीत्यस्य मम दर्शनमित्यर्थ । तिङ्प्रत्यया नवापि तद्युष्मदस्मच्छब्दविकृतय एव । एवमेव कालभेदादिद्योतनाय द्विर्भावादय कृता दृश्यन्ते । तत्तदर्थे रूढाना पुरुषत्रयबोधकेष्वन्यतमेव शब्देन साक सङ्कलनया भाषा जातेति वक्तु शक्यते ।

नदी+जल+स्नान+करो+मि इत्युच्चारिते नद्या जले स्नान करोमीत्यर्थ को वा वेत्तु न शक्नोति ? बहु+पुरुष+कुर्व+ते इत्युक्ते बहुपुरुषा कुर्वते इत्यर्थ, बहु+पुरुष+कुर्+म इत्युक्ते वय बहव पुरुषा कुर्म इत्यर्थं वा पुरुषभेदेन तच्छब्दास्मच्छब्दसान्निध्यवशात्को वा वेत्तु न शक्नोति ?

वस्तुत केषा चिदारण्यकानामनागरकजनाना भाषासु विभक्तिप्रत्यया न सन्त्येव । ते हि तत्तदर्थबोधकशब्दाना सम्मेलनेनैव विना विभक्तिप्रत्ययान् समासावयवपदेष्विव औचित्यानुरोधेन वाक्यार्थबोध जनयन्ति ॥

सस्कृते भूतकालद्योतनाय धातोरभ्यास क्रियते । न हि धातो द्विरुक्ति भूतकालमभिधत्ते । तत्र धातुद्विरुक्तेस्सङ्केत कृत इति ज्ञायते । युष्मदस्मत्तच्छब्दसान्निध्यवशात धातव भिन्नपुरुषा क्रिया द्योतयन्तीत्यत्र भाषान्तरे निदर्शन वर्तते । कर्णाटकभाषाया हि 'अवनु अदु अवळु' इति लिङ्गत्रये तच्छब्द प्रयुज्यते । एतान् शब्दान् धातुना सम्मेल्य 'होगुवनु', होगुवदु, होगुवळु' इति धातुसर्वनामसमासेन लिङ्गभेद पुरुषभेद च कर्णाटा बोधयन्यि । एतेन च भाषा पुरुषतन्त्रा न तु देवतन्त्रेति सिद्धम् ।

## भाषासन्तति

आभ्यन्तरभाषाजनककारणानि प्रत्युच्चारयितृजन भिद्यन्ते । कारणभेदाच्चोच्चारितशब्देषु वर्णव्यत्ययादिदोषास्सञ्जायन्ते । वर्णव्यत्यय-

वर्णलोपवर्णागमस्वरभेदरूपभेदादिकारणादेकैव भाषा गिरिशिखरान्निस्सरन्ती प्रस्तरप्रहता सरिदिव शाखोपशाखा प्रवहति। शाखाभूताश्च भाषा मातृभाषातो भिद्यमाना अपि परस्परसाम्यं मातृसाम्यं च न जहति। भाषाणां परस्परं साम्यं दृष्ट्वा तासां एकमातृप्रसूतत्वमनुमातुं वयं शक्नुमः। भाषाणां च परस्परं साम्यं न कतिपयशब्दमात्रनिष्ठं ग्राह्यं, न हि संस्कृतशब्दप्रायाऽपि कर्णाटभाषा संस्कृतभाषाया दुहितेति वक्तुं शक्यते। यासु तु भाषासु समानार्था यत्किंचित्समानरूपाश्चानेके धातवस्सर्वनामशब्दाः सुप्तिङ्प्रत्यया आबालवृद्धं प्रतिगृहं प्रयुज्यमानानि बन्धुनामानि समानरूपाणि च दृश्यन्ते, ता एवैकमातृप्रसूता इति मन्तव्यम्। तदित्थं यासां भाषाणां धातुसर्वनामसुप्तिङ्प्रत्ययेषु परस्परसाम्यं निस्सन्देहं दृश्यते, तास्सोदर्यः समानमातृकाः सपिण्डाः सगोत्रा इति वा व्यवहारार्थमत्राभिधीयन्ते। परस्परसाम्यपर्यालोचनया द्राविडभाषागोत्रमेकं आर्यभाषागोत्रमन्यत् सेमिटिक्भाषागोत्रमपरमिति पाश्चात्यविद्वांसः सप्रमाणं वदन्ति॥

(१) तमिळ् कर्णाट तेलुगु मलयालभाषा द्राविडभाषागोत्रापत्यानि।

(२) हिब्रु अरेबिक् बाबिलोनियन् भाषाः सेमिटिक्गोत्रप्रविष्टाः।

(३) संस्कृत झेंड् ग्रीक् लाटिन् जर्मन् इंग्लीष् गाथिक् स्लवानिक् केल्टिक्प्रभृतिभाषाः आर्यभाषागोत्रप्रविष्टाः। प्राकृत मागधीशौरसेनी महाराष्ट्र्यादिभाषाश्च आर्यमातृभाषाप्रसूतय इति निर्णेतुं शक्यते। न हि "दअमाणा पमदाओ सिरीसकुसुमार्यि ओदसआदि अज्जन्स पुत्तो आअदो। शालाहणस्स रैण्णो रट्ठम्" इति

प्राकृतभाषावाक्यानि दयमाना प्रमदाश्शिरीषकुसुमान्यवतसयन्ति, आर्यस्य पुत्र आगत, शालिवाहनम्य राज्ञो राष्ट्रमिति, सम्कृत-वाक्याना रूपान्तराण्यपि सस्कृतभाषासापिण्ड्य विजहति।

सस्कृतशब्दा एव यथाविधि लोपादेशागमेषु कृतेषु प्राकृतशब्दा-त्मना परिणमन्तीति केचन मन्यन्ते। नैवमेतत्—न हि प्राकृतादिभाषा विद्वद्भि गूढलिपिरिव परप्रतारणाय कल्पिता। विद्वद्भि सिद्धाना-मेव शब्दाना व्युत्पत्तिप्रदर्शनाय व्याकरणशास्त्र प्राकृते सम्कृते च कृतम्। न तु जनाना व्यवहारसौकर्याय शब्दा भाषा वा वैया-करणै कल्पिता। यथा स्मृतय महाजनानुगृहीतान्धर्माचारसमा-यान्केवल बोधयन्ति, न तु तान्कल्पयन्ति, तथैव व्याकरणशास्त्रा-ण्यपि व्यवहारार्हाणि शब्दरूपाणि वाक्यरूपाणि च बोधयन्ति न तु कल्पयन्ति॥

पुरा हि एकभाषाव्यवहारिणामपि राजकोपात् परस्परद्वेषाद्वा परस्परससर्गं त्यक्त्वा विभिन्नदेशमधिवसता जनाना भाषा वर्णव्य-त्ययादिकारणात् बहुधा भिन्ना समभवदिति ज्ञायते। देशभेदा देव हेतो महाराष्ट्र मागधी शौरसेनी घौर्जरीति बह्वय भाषास्सम भवन्निति तत्तन्नाम्नैव ज्ञायते। सस्कृतभाषायामपि वैदिकी लौकिकीति द्वैविध्य दृश्यते। सस्कृताया लौकिकभाषायामपि अनेके भेदास्समवेत न्नेति पाणिनिव्याकरणादेव ज्ञायते। देवा इतीति केचित्, देवायितीति चान्ये व्याहरन्निति 'लोपश्शाकल्यस्ये' इति सूत्रादेवावगम्यते। तथा च वैयाकरणा इद रूप साधु, नेद रूप साध्विति न स्वाभिप्रायेण विधि-निषेधशास्त्राण्यकुर्वन्, अपितु महाजनानुगृहीताना शब्दाना साधुतामत-थाविधानामसाधुता च दर्शयन्तश्शास्त्राणि व्यधुरिति स्पष्ट ज्ञायते॥

पाणिन्यादिकृतव्याकरणनियमात् सस्कृतभाषा निगळबद्धपादा

चीनयुवतिरिव इतस्ततो वा स्वैरं चलितुमशक्नुवन्ती न वृद्धि मद्यापि लभते। वृद्धिर्हि विकारः। नियतरूपस्य न कदापि विकारस्सम्भवति। नियरूपं हि संस्कृतमासीत्। अतश्च तद्विद्वत्स्वेवाधिष्ठानं लब्ध्वा स्वस्वरूपे एव तिष्ठति। पाणिन्यादिभ्यो नियन्तृभ्यः प्राक् संस्कृतभाषा स्वैरमुच्छृङ्खला जनरसनारङ्गे नृत्यन्ती बहुविधानि रूपाणि बिभ्रती मनोहारिणी चकास्ति स्म। तस्या एकैकं रूपमेकैकस्मिन् जनपदेऽद्याप्यादरातिशयेन रक्षितं दृश्यते। तादृशरूपाण्येव भाषान्तराणि—ग्रीक् लाटिन् जर्मन् इङ्लिष् झेंड् इत्याद्यभिधानान्यद्याप्युपलभ्यन्ते। तासां सगोत्राणां भाषाणां वर्णव्यत्ययादिनिमित्तानीदानीं जिज्ञासामहे॥

## तत्रोदाहरणम्

ग्रीक् भाषा हि संस्कृतसापिण्डा इत्युक्तम्। संस्कृते नभस् इति शब्दः ग्रीक्भाषायां नेफोस् इति दृश्शते। भ्रातर् शब्दः फ्रतोर् इति दृश्यते भजतीति शब्दः फगेन् इति, धर्षतीति शब्दः थर्सोस् इति, मधु शब्दः मेथु इति च दृश्यते। अत्र सर्वत्र वर्गचतुर्थः वर्गद्वितीयरूपेण परिणत इति बाढं ज्ञायते। अकारश्चौकारात्मना परिणत इति चावगम्यते। समानमातृभाषामेव व्यवहरन्तो ग्रीक्जना यदा भरतखण्डमिदानीमधितिष्ठतामार्याणामादिपुरुषैर्बन्धुभिस्साकं कुत्र चिद्देशे चिरानुवृत्तं सवासं त्यक्त्वा कुताश्चित्कारणाद्देशान्तरमायासिषु, अन्ये च तदानीमन्यदा वा भरतखण्डमगमन्, तदा ते देशकालाहारभेदकृतादान्तरभाषाजनककारणवैकल्यात् वर्गचतुर्थस्थानेषु वर्गद्वितीयमकारस्थाने च ओकारमुदचरन्निति वक्तुं न कोऽपि सन्देग्धि॥

एवमेव सस्कृते भरतीति शब्द लाटिन्भाषाया फेरो इति, भवतीति शब्द फूअम् फूतुरस् इतिच, धूम इति शब्द फूमस् इति, धयतीति शब्द फेलिति, धेना शब्द फेमिना इति च दृश्यते, अत्रापि वर्गचतुर्थ वर्गद्वितीयात्मना पारिणत इति स्पष्ट ज्ञायते। किं च धस्थाने औष्ठ्य फ कृत इति ज्ञायते ॥

एवमेव तुभ्यम् इति शब्द लाटिन्भाषाया तिबि इति रुधिरशब्द रुब्रोस् इति, इह (इध) इति शब्द इबि इति, नभस् शशब्द नेब्यूल् इति च दृश्यते। अत्र वर्गचतुर्थस्थाने प्रथम कृत वर्गद्वितिय वर्गतृतीयात्मनाऽन्ते परिणत इति ज्ञायते। अतश्च इहेत्यर्थे सम्कृतभाषाया पुरा इध इत्यासीदिति, स च लाटिन्भाषाया फात्मना पारिणम्य क्रमेण वर्गतृतीयात्मना च परिणत इति ज्ञायते ॥

किं च सस्कृतद्वारशब्द लाटिन्भाषाया फोरस् इति, दृढशब्द फोर्टिस् इति, बन्ध शब्द फण्ड इति च दृश्यते, अतश्च सस्कृते द्वारदृढबन्ध शब्देषु आद्यक्षरै वर्गचतुर्थैरेव भवितव्यम् इत्यूह्यते। यत अभा त्सीत्, बन्धेर्लुङि भकारो दृश्यते, तत बन्धेरादिवर्ण भकार आसीदित्यूहा सप्रमाणेति वदन्ति ॥

किं च गृध्, बुध्, बन्ध्, दभ्, दह् इत्यादिषु धातुषु आद्यक्षर वर्गचतुर्थमासीदिति ज्ञायते अत एव अभौत्सीत् बुद्धेर्लुङि, अधक् इति दहेर्वैदिके लुङि च वर्गचतुर्थो दृश्यते इति। सस्कृते वर्गचतुर्थ ग्रीक्लाटिन्भाषयो वर्ग द्वितीयरूपेण इग्लीष् जर्मन्भाषयो वर्ग तृतीयरूपेण च दृश्यते

सस्कृते भ्रातर् शब्द ग्रीक्लाटिन्भाषयो फ्रतोर् इति जर्मन्निग्लीष्भाषयो ब्रदर् इति दृश्यते अतश्च जर्मन्निग्लीष्भाषयो ग्रीड् (आशा) बीटन्, बैन्डन् (बद्ध) इत्याशाबन्धार्थकयोश्शब्दयो वर्ग

तृतीयो यस्माद्दृश्यते तस्माद्धेतो गृध् बन्ध्धात्वो रूपे मातृभाषाया घृध् भन्द् इति वर्गचतुर्थ आसीदिति । अतश्च सस्कृतग्रीक्लाटिनादि भाषाणा अन्या मातृभाषा समासीदिति ज्ञायते इति विदुषा सिद्धान्त ॥

सस्कृते विद्यमाना त्व, त्रि, मित्र, चत्वार इति शब्दा अवेस्थापरनाम झेन्द् भाषाया थ्व, थ्रि, मिथ्र, चथ्वार इति श्रूयन्ते अतस्सस्कृते वर्गप्रथम झेन्द्भाषाया वर्गद्वितीयात्मना परिणत इति स्पष्टम् सस्कृते सप्त, सत्य, सिन्धु इति शब्दा तस्यामेव झेन्द् भाषाया हप्त, हैथ्य, हिन्दु, इति' दृश्यन्ते ग्रीक्भाषायामपि सप्तेति शब्द हेप्तेति सदस् शब्द हेदस् इति च दृश्यते अतस्सस्कृत सकार झेन्द्ग्रीक्भाषयो हकारात्मना परिणत इति स्पष्टम्

**अधोदर्शितशब्दानां भाषासु रूपान्तराणि परीक्षितव्यानि**

| सस्कृत | ग्रीक् | लाटिन् | गाथिक् | जर्मन् | इग्लीष् |
|---|---|---|---|---|---|
| पशु | | फेपस् | फैहु | विच् | फी |
| नपात् | | नेफोस् | | नेफे | नेफ्यू |
| तृणम् | | | थार्नस् | डार्न् | थारन् |
| वर्तते | | वर्टो | वैर्थन् | वर्डन् | |
| त्रय | | त्रेस् | थ्रिस् | ड्रि | त्रि |
| शुन | कुनोस् | | हुन्ड्स् | हुड् | हौड् |
| दिशति | दीक्नुमि | | गतैहन् | टीगेन् स | |
| क' | | क्वोड् | ह्वस् | वस् | व्हाट् |
| फेन | | फम् | फीम् | | फोम् |
| दश | | देकेम् | तैहुन् | त्सेह् | |
| जानु | | गोनु | क्नयु | क्नी | क्नी |

| संस्कृत | ग्रीक् | लाटिन् | गाथिक् | जर्मन् | इंग्लीष् |
|---|---|---|---|---|---|
| अज्र | | अग्रोस् | अक्स् | | एकर् |
| युगम् | | जुगोन् | जुक् | जोच् | योक् |
| भरामि | फेरिन् | | बैरेन् | | बेर् |
| हिंस | | केन् | गान्स् | | गूस् |
| वहामि | | वेहो | गविगन् | | वेन्ह् (व्हे) |

नियमा

पूर्वोक्तशब्दरूपपरीक्षया इद सिद्ध्यति

I. सस्कृतशब्देषु दृश्यमाना वर्गचतुर्था ग्रीक्लाटिन्भाषयो वर्ग द्वितीयात्मना गाथिक् जर्मनिंग्लीष् भाषासु वर्गतृतीयात्मना सस्कृतशब्देषु दृश्यमाना वर्गप्रथमा गाथिक्जर्मनिंग्लीष्भाषासु वर्गद्वितीयात्मना च परिणता इति । किंच सस्कृतशकार इतर भाषासु ककारात्मना हकार गकारात्मना च परिणत इति च ज्ञायते अय च नियम ग्रिम्नाम्ना विदुषा दृष्ट इति प्रथमो ग्रिम्नियम इति पाश्चात्या वदन्ति

II कि च गाथिक्भाषाया दृष्टा प, त, क, वर्णा जर्मन्भाषाया फ, थ, ख (च) वर्णा भवन्ति गाथिक्दृष्टा फ, थ, ख वर्णा फ, ट्ज चवर्णात्मना भवन्ति अय द्वितीयो ग्रिम्नियम

एतन्नियमयोरुदाहरणानि

| सस्कृत | -ीक् | गाथिक् |
|---|---|---|
| पिता | पतेर् | फादर् |
| भ्राता | फ्रतेर् | ब्रदर् |

अत्र ग्रिम्नियमानुसारेण सस्कृतवर्गप्रथम ग्रीक्भाषाया प्रथम एव दृश्यते वर्गचतुर्थस्तु वर्गद्वितीयात्मना परिणतो दृश्यते

सस्कृतवर्गप्रथमा गाथिक्भाषाया वर्गद्वितीया जाता यद्येव फादर् ब्रदर् इति वर्गतृतीया कथमिति विचिकित्सा जायते अत्रापि वर्गद्वितीयेन भाव्य खलु अत एतन्निष्कर्षाय वर्नर् नामा अपरो विद्वान् नियममन्य दृष्टवान् स चेत्थ वर्तते

III शब्दानामन्ते मध्ये वा श्रूयमाणा वर्गद्वितीया वर्गतृतीया-स्स्युर्यदि तेषा शब्दानामादिरुदात्तो न भवतीति

फादर् ब्रदर् इत्यादिषु द्वितीयस्स्वर उदात्त इति सस्कृत शब्दयो दृष्ट वर्गप्रथमस्तकार द्वितीयो भूत्वा क्रमेण तृतीय दकारात्मना परिणत इत्युदाहरणसमन्वय

स्वरव्यत्यणस्तूदाहरणेभ्यस्स्पष्ट ज्ञायते

| सस्कृत | लाटिन् | ग्रीक् | संस्कृत | लाटिन् | गीक् |
|---|---|---|---|---|---|
| अवि | ओविस् | ओयिस् | भरामि | फेरो | फेरो |
| अष्टौ | ओक्टो | ओक्टो | भरन्ति | | फेरोन्ति |
| क | क्वोड् | पोथेन् | अहम् | एगो | हेगो |
| भरान्ति | | फेरोसि | अस्ति | एस्ति | |
| तत् | इस्टुद् | तो | ददर्श | | देदोर्को |
| वृक | | लुकोस् | | | |

अत्र अकार क्वचिदेकारात्मना क्वचिदोकारात्मना च पारिणतो दृश्यते

| स | ग्री | स | ग्री |
|---|---|---|---|
| अज | अगो | अनिति | अनिमोव्स् |
| चतुरश्र | अक्रोम् | अश्मन् | अक्मोन् |

एषूदाहरणेषु अकार क्वचिदकाररूपेणैव दृश्यते अतश्च सस्कृताकार क्वचिदकारात्मना क्वचिदेकारात्मना क चिदोकारात्मना च परिणत इति ज्ञायते

एतेन पुरा संस्कृतस्य मातृभाषाया अकार, ह्रस्व एकार, ह्रस्व ओकारश्चासन्, संस्कृते तु एतत्स्वरत्रयमपि ह्रस्वाकाररूपेणैव परिणतमासीत् ग्रीक्लाटिन्भाषासु तु एतत्त्रयमपि पृथक्स्वस्वरूपेण रक्षित वर्तते इति। आकारोप्येवमेव—

| स | ग्री | स | ग्री | स | ग्री |
|---|---|---|---|---|---|
| प्रात | प्लेतो | मातर् | मातेर् | द्वा | दुओ |
| मास् | मेन् | ददाति | देदोसि | | |

तथा च आकार एकारात्मना ओकारात्मना आकारात्मना च दृश्यते

ग्रीक्भाषाया पदान्ते न्, स्, र्, वर्णेभ्य अन्यानि व्यञ्जनानि लुप्यन्ते

| संस्कृत | ग्राक् |
|---|---|
| अभरत् | एफेरो |
| अभरन् | एफेरोन् |

१. इदमत्र बोध्य—यद्ध्यक्ष, सुद्ध्युपास्य इति सन्धौ यणादेश श्वान इति प्रथमाबहुवचने सम्प्रसारणाभाव शुन इति द्वितीयाबहुवचने सम्प्रसारणाविधि तत्सर्व पदसहितोच्चारणकालेस्वरव्यत्ययस्योदाहरणम्। उच्चारणानुरोधी विधि न तु विध्यनुरोध्युच्चारणमिति देशकालाहारादिषु व्यत्ययेन तात्वादिवर्णोच्चारणस्थानेषु व्यत्ययो जायते, तेन च उच्चारणव्यत्यय इति

२ उदात्तादिस्वरव्यत्ययेन स्वरवर्णेषु व्यत्ययो भवति

| स | ग्री | ला |
|---|---|---|
| एमि | इव | इम |
| आप्नोति | आप्नुत | आप्नुवन्ति |
| ददर्श | ददृशतु | ददृशु |

अत्र द्विवचनबहुवचनेषु उदात्त अन्ते उपान्ते वा भवतीत्यत एकार रेफ च हित्वा इकार ऋकारश्चोच्चार्यते ।

३ क्वचिच्चोच्चारणे सौकर्याय पूर्वसवर्ण परसवर्णो वा क्रियते– यथा स्तृणोतीत्यत्र दन्त्यनकारस्थाने पूर्वकारसवर्ण मूर्धन्यो णकार उच्चार्यते श्वशुरशब्दे आदिसकारेऽपि स्वोत्तरतालव्यशकारसाम्यात् आदावपि तालव्यश्शकार उच्चार्यते श्वशुरशब्द आदिसकार इति लाटिन्भाषाया सोसर्शब्दे सकारदर्शनात्-ज्ञायते ग्रीक्भाषाया हेकुरोस् इति सकारस्थानिकहकारदर्शनाच्चेद दृढीक्रियते.

४ क चिच्च समानवर्णद्वयसयुते शब्दे उच्चारणसौकर्याय पूर्ववर्णलोपो वा वर्णान्तरादेशो वा क्रियते यथा सस्कृते व्रभ्रशब्द ग्रीक्भाषाया फ्रत्रियेतिपरिणतो दृश्यते उभयत्रापि आदिरेफलोपेन वभ्रमिति फत्रियेति च प्रयुक्त दृश्यते एवमेव स्थाधातोर्लिटि स्थस्थौ=थस्थौ इति रूपे सम्भवत्यपि थस्यस्थाने तकार कृत्वा तस्थावित्युच्चार्यते

५ क चित्पादादौ अकाराद्यन्यतमस्स्वरो निक्षिप्यते, पदादौ र्, न्, म्, ओवर्णेषु सत्सु यथा —रुधिरमिति सस्कृतशब्द ग्रीक्भाषाया एरुथ्रोस् इति दृश्यते तथा नृशब्द अनेरितिदृश्याते स्कूलित्याङ्गलेयशब्द इस्कूलिति जनैरुच्चार्यते

६ सयुक्तवर्णमध्ये क चिदुच्चारणसौकर्याय स्वरो निवेश्यते यथा इन्द्रशब्द इन्दिर इति दर्शतेति शब्द दरशतेति प्रकारशब्द परकारेति स्वर्णशब्द सुवर्णेति चोच्चार्यते

७ क्वचिद्वर्णद्वयमध्ये स्वर विलोप्य सयुक्ताक्षर क्रियते—

राजन्+आ=राज्ञा जगम्+अ+तु=जग्मतु

८ क चित्समानवर्णादन्यस्मिन्समानवर्णे परे एको लुप्यते –
शेव+वृध =शेवृध  शष्पि+पिञ्जर =शष्पिञ्जर

९ क चिद्वर्णागमो दृश्यते
यथा हस इति

त इमे विकारा वार्तिक एव वर्णिता —
"भवेद्वर्णागमाद्धस सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृते वर्णनाशात्पृषोदर" ॥ इति ॥

१० सारूप्यभ्रान्तिरपि क्वचिन्छब्दस्वरूपविकाराय निमित्त भवति –
दिवस्पतिशब्दसारूप्यबुद्ध्या वनस्पति ऋतस्पाति रथस्पति-
रित्यादयःशब्दा प्रयुक्ता दृश्यन्ते
इन्द्राग्नीशब्दसारूप्यदृष्ट्या इन्द्रावरुणौ इन्द्रामरुतौ इति च
प्रयोगो वर्तते
देवीशब्दात्तृतीयाया देव्या इति भवति एव प्रियाशब्दात्
तृतीयाविभक्तौ टापि प्रिया+आ=प्रिया इत्येव भवति ।तथापि
प्रियया इति प्रयोग दृश्यते वेदे दक्षिणा गुहा इति तृतीया-
विभक्तौ प्रयोगो दृश्यते पितु इति षष्ठ्यन्तसारूप्यबुद्ध्या
पत्यु सख्यु इति शब्दप्रयोग कृत । एव पित्रे सादृश्यात्
पत्ये सख्ये इति प्रयोग

## क्वचित्–अत्यन्तसाम्यम्

अथेदानीं सस्कृतइंङ्भाषयो परस्परसाम्य विशिष्य प्रदर्श्यते—

१ नकारमकाराभ्या प्राक् सस्कृते श्रूयमाण अकार इंङ्भाषाया
ह्रस्व एकार भवति, क्वचित् इकारो भवति
(१) सन्त=हेन्तेम्  उपम=उपेमेम्  अह=अझेम्
(२) य=यिम्  वाच=वाचिम्  द्रुह=द्रुसिम्

नृत्वे समेऽपि राज्ञां स्त्रीणां चैवं विशेषमवगच्छ ।
तस्माद्राजेवेष्टे नारीत्येतत् तवैव बहुशोभि ।
अथ वा नियमितविषये राजेवेष्टे तथाहि नियमोऽस्ति ।
रक्षारीतौ कथितो यतश्च पूजा त्वयाभिलषिता स्यात् ।
नियमं विहाय न खलु प्रीत्याधानेन दुष्टेन ।
कृत्येनासां प्रीतिं कर्तुं यत्येत बहुदोषात् ।
दोषप्रवणं स्त्रीणां स्वान्तं प्रोक्तं विविच्य वाक्यशतम् ।
तस्मान्निरोध आसां महते दोषाय कल्पेत ।
न कश्चिद् योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यस्ताः परिरक्षितुम् ।
अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे । इति ।
ये किल नारीधर्माः शुश्रूषाद्याः विशिष्य शास्त्रोक्ताः ।
तेषु च गृहकृत्येषु च रमतामेषा यथेष्टमितिबोधात् ।
दोषप्रसक्तिलेशो नैवात्रास्तीति सन्दिष्टम् ।
एवं याः किल साध्व्यः ता एवोद्दिश्य गीतैषा ।
इहपरलोकजभोगे साधनमत्या न जातु नारीत्वात् ।
प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन । इति ।
उत्पादनमपत्यस्य जातस्य परिपालनं ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्री निबन्धनम् ।
अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह । इति ।
सुतजनिरत्याद्यर्थे प्राणिसमाने नचात्र तात्पर्यम् ।

११ सस्कृतश्व स्प भवति

विश्व = विस्पेम् अश्व = अस्पो श्वेत = स्पेयितेम्

१२ क्वचित् हकार जकारश्च झकार भवति

जात = झात यजते = यझते

हस्त = झस्त अह = अझेम्

१३ सकार हकारात्मना ज्ञ श्नात्मना च परिणमति

कस्मै = कह्मै यज्ञ = यश्नो

सुबन्तप्रक्रिया सप्तविभक्तिषु चेत्थ दृश्यते

| गिरि = गरिस् | दाता = दात | यज्ञ = यश्नो | |
|---|---|---|---|
| गीरस् | दात | यश्नो यश्नाहो | |
| गरिम् | दातरेम् | यश्नेम् | यश्ना |
| गरी | दाश्र | श्नया | यश्नैस् |
| गरोयिर् | दाश्रे | यश्नायि | यश्नेब्यो |
| गरोयिस् | दाश्रत् | यश्नाहे | यश्ननम् |
| गरा (गिरौ) | दाश्रो | यश्ने | यश्नेसु |
| | दातरे | यश्न (सम्बुद्धौ) | |

---

| अह=अझेम् | त्व=तूम् |
|---|---|
| अझेम् | तुम् |
| मन् | तु |
| मा | थ्वाम् थ्वा—इत्यादि |
| मे | |
| मत् | |
| मन वाएम्, नो | |

---

इदानीं पार्सिनाम्ना ये प्रसिद्धा जना भरतखण्डे वर्तंते तेषा पुरातनाना भाषा झेंड्नाम्ना अवेस्थानाम्ना च प्रसिद्धा समासीत् तस्या भाषाया यानि यज्ञक्रियोपयुक्तानि सूक्तानि वर्तन्ते तानि वेदसूक्त सदृशानि दृश्यन्ते कानि चित्तानि सूक्तान्यत्रोदाहरिष्यन्ते

इद सस्कृते पठ्यते

| | |
|---|---|
| (१) तें अमवेन्तें यझतें । | (१) त अमवन्त यजत |
| सूरें दामोहु सेविस्तेम् | सूर धामसु सविष्ठ |
| मिथ्रें यझै झोथ्राब्यो | मित्र यजै होत्राभ्य |

(२) यिमहे क्षथ्रे और्वहे
नोयित् अओतें अन्ह नोयित् गरेमेम्
नोयित् झौर्व अन्ह नोयित् मेरेथ्युस्
नोयित् अरस्को देयिवो दातो
पञ्चदश ऋचारोयि थे पित पुथ्रश्च रोदे स्व कतराश्चित्
यवत क्षयोयित् ह्व थ्वो यिमो
विव हुतो पुथ्रो

इद सस्कृते—

(२) यमस्य क्षत्रे और्वसे
न शीत आसीत् न घर्म
न जरा आसीत् न मृत्यु
न ईर्ष्या देवदत्ता
पञ्चदश प्रचरत
प्पिता पुत्रश्च रोदयेष्वा कतराश्चित्
यावदक्षियात् स्वध्वा यम विवस्वत पुत्र

अत्र क्षत्रे = राज्ये, और्वसे = श्रेष्ठे, पञ्चदश = पञ्चदशवर्ष-स्थानीय, प्रचरत = सञ्चरत, रोदयेषु = अक्कृतिषु, आ = समन्तात् स्वध्वा = सुमार्गे, अक्षियत् = अवसत् इत्यर्थः

———

तदित्थं झेंड् इति अवस्थेति च प्रसिद्धा पार्सि जनाना पुरातनेषु कृतप्रचारा भाषा सस्कृतसगोत्रेति बाढ ज्ञायते पार्सिजनपुरातनाना देवपूजोपयुक्तानि सूक्तानि वेदभाषा समानानीति स्पष्ट ज्ञायते

अथेदानीं पूर्व प्रतिपादित सस्कृतग्रीकूलाटिन्भाषाणा परस्पर साम्य न काचित्कम् अपि तु सम्पूर्णमिति विशदयितु यत्न क्रियते तासा परस्परसाम्य सर्वनामशब्देषु विशदीभवति —

| स | ग्री | ल्गा | स | गी | ल्या |
|---|---|---|---|---|---|
| अहम् | एगो | एगा | स | ओ | इस्टे |
| माम् | मे | मिहि | तम् | तोन् | इस्टुम् |
| मह्यम् | मायि | मिस् | तस्य | तायिओ | इस्टियुस् |
| त्वम् | सु | तुम् | तस्मात् | तोदे | इस्टो |
| त्वाम् | से | ते | | | |
| ते | सायि। तायि। | तिबि | तस्मिन् | पायि तेयिदे | इस्टात् |

———

सङ्ख्यावाचकशब्देषु चेत्थ साम्य दृश्यते

| | | |
|---|---|---|
| द्वौ | दुओ | दुओ |
| त्रय | त्रिस् | त्रेस् |

| स | ग्री | ल्या | स | ग्री | ल्या |
|---|---|---|---|---|---|
| चत्वार | तेत्तरेस् | क्वाट्टूर् | अष्ट | हेक्टो | आक्टो |
| पच | पेण्डे | क्किंके | नव | ऐन्न | नोवम् |
| षट् | डेक्स् | सेक्स् | दश | देक | देकेम् |
| सप्त | हेप्ट | सेप्टेम् | एकादश | हेन्देक | एन्डेसिम् |

---

विचारक्रम

कर्णाटभाषा सस्कृतशब्दभूयिष्ठाऽपि सर्वनामशब्देषु सङ्ख्या-वाचकशब्देषु च विषयेषु सस्कृतभाषाया बाढ भिद्यते यदि कर्णाट भाषा सस्कृतभाषासगोत्रा स्यात् तदा तस्यास्सर्वनामशब्दास्सङ्ख्यावाचकाश्शब्दाश्च सस्कृतसर्वनामसङ्ख्यावाचकशब्दसदृशा एव स्यु । यतो नैवमेतदस्ति तत कर्णाटभाषा संस्कृतसगोत्रा नेति बाढ वक्तु शक्यते ग्रीक् लाटिन् आंग्लेय अवेस्थभाषासु ते शब्दा सस्कृतशब्द सदृशा वर्तन्ते इति तासा सगोत्रत्व वक्तु शक्यते न केवल मेतेष्वेव शब्देषु तासा परस्परसाम्यमपि तु गृहोपयुक्तेषु बन्धुनामसु पशुमृगनामसु देवादिबोधकशब्देषु च तासा साम्य वर्तते

| सस्कृत | अवेस्थ | गीक् | लाटिन् | गाथिक् |
|---|---|---|---|---|
| पितृ | पितर् | पतर् | पतेर् | फादर् |
| तात | | तात, तेत्त | तात | अत्तन् |
| | | अत्त, अप्प | अत्त | |
| मातृ | मातर् | मेतेर् | मतेर् | मौतर् |
| सूनु | हुनु | | | सुनु |

| संस्कृत, | अवेस्थ | ग्रीक् | लाटिन्, | साथिन्, |
|---|---|---|---|---|
| दुहितृ | दुग्धर् | डुगतेर् | | डाटर् |
| भ्रातृ | ब्रातर् | फ्रातेर् | फ्रेटेर् | ब्रोदर् |
| स्वसृ | ह्वन्हर् | | सोरोर् | स्विस्टर् |
| पितृव्य | | पत्रोस् | पत्रुस् | फतरो |
| श्वशुर | ह्वसुर | एकुरोस् | सोसेर् | स्वैह्रान् |
| श्वश्रू | | एकुर | सोक्रुस् | स्वैह्रो |
| जामातृ | झमातर् | गम्ब्रोस् | जेनेर् | .... |
| स्नुषा | सुनुहार् | न्वोस् | नुरुस् | स्नुर् |
| देवर | | दायेर् | लोविर् | ताकोर् |
| पति | पैति | पोसिस् | पोतिस् | फात् |
| पत्नी | पत्नि | पोत्निय | | |
| विधवा | बेव | एथोस् | विदुअ | विदुवो |
| अर्भक | | अर्फनोस् | आर्बस् | अर्बि |
| जन | | गेनोस् | गेनुस् | कुनि |
| पशु | पसु | पेकुस् | | फैहु |
| गो | गवो | बोस् | बोस् | चुओ |
| श्वन् | स्पन् | कान् | कनिस् | हुन्ड् |
| अश्व | अस्म | इप्पोस् | एकुस् | एहु |
| पुत्र | पुत्र | पोलोस् | पुलुस् | प्सल |
| वृक | वेह्रक | लुकोम् | लुत्रीस् | वुल्फ् |
| मूष | | मूस् | मुस् | मूस् |
| उद्र | | उद्र | | ओट्टर् |
| कोकिल | | कोक्कूस् | कुकुलस् | कुचुक् |

| संस्कृत | अवेस्थ | ग्रीक् | लाटिन् | गाथिच् |
|---|---|---|---|---|
| दम | | डोमोस् | डोमस् | तिम्रजन् |
| वास्तु | वान्ह् | अस्तु | | विस्ट् |
| पुर् | | पोलिस् | | |
| पथि | पथी | पतोस् | पोन्स | फाड् |
| मधु | मधु | मेधु | | मेतु |
| रथ | रथ | रोत | | राद् |
| मनस् | मनन्ह् | मेनोस् | मेन्स् | मुन्स् |
| जानामि | झन् | गिग्नास्को | ग्नोस्को | कन्न् |
| बोधामि | बुध् | पुन्थनोमै | | अनबियुदन् |
| देव | दैव | थियोस् | डियुस् | तिवर् |
| अग्नि | | इग्निस् | | ओग्नि |
| नक्त | | नुक् | नाक्स् | नैघ्ट |

---

## प्रयोजनम्

तदित्थं परीक्षायां कृतायां परश्शतानि परस्सहस्राणि च शब्दरूपाणि सादृश्यसूचकानि दृश्यन्ते । अत इदं सिद्ध्यति यद्भरतखण्डनिवासिनामार्याणां पुरातनैस्संस्कृत ग्रीक्लाटिन्जर्मन्नाङ्लैयावेस्थभाषाव्यवहारिणां पुरातनाः कुत्र चिदेकस्मिन्देशेऽवसन् । तेषां परस्परं यौनानुबन्धश्चासीत् । कुतश्चित्कारणात्ते भिन्नभिन्नदेशान्प्रापुः । तेषामेकापि भाषा वर्णव्यत्ययाद्विभिन्नानेकरूपमावहत् । इति ॥

एतत्सर्वभाषासाधारणशब्दार्थपर्यालोचनया कथ तेऽजीवन्? कथमयुद्ध्यन्त? कथ पत्तनान्यकुर्वन्? लोहेषु कीदृशा लोहा· तैर्ज्ञाता आसन्? देवेज्यादिक कथ तेऽन्वतिष्ठन्? कीदृश तदानीं वर्णाश्रम-विभागस्समवर्तत? इत्यादीन् विषयान् निष्कृष्य तेषा चरित्रमपि वर्णयितु शक्यते

तदिद शब्दभाषातन्त्र पाश्चात्योपज्ञमिदानीमेधमान[1] वर्तते तदध्ययन सप्रयोजनमित्यलम्

आर्. श्यामशास्त्री

1 यास्कनिरुक्तसमालोचने भारतीयोपज्ञमित्यपि वक्तु शक्यते ।



दिवान् सि. रंगाचार्लु, सि.ऐ.इ.

To face page 191

## दर्शनमीमांसाविषयसंग्रहः

# दर्शनमीमांसा

## (१) विचारारम्भसमर्थनम्

शुद्धा श्रद्धा निदान भुवि मतविततौ स्वस्वसिद्धान्तरीत्या
स्पर्धा निर्धार्यतेऽद्धा परिमितिरहितग्रन्थसन्दर्भकॢप्तौ ।
श्रद्धास्पर्धामयेऽस्मिन् जगति बहुविदा मानसोल्लासहेतो
सर्वेषा दर्शनाना समुचितसमये सामरस्य प्रतीम ॥

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्त प्राज्ञो जानाति नेतर ॥[1]

इत्युक्तरीत्या बुद्धे प्रथम फल लोकचारित्रविज्ञानम् । तच्च नैजबुद्धि-विभवेन विवेचनीयमित्यन्यत्राप्युक्तम्—

यस्य नास्ति निजा प्रज्ञा केवल तु बहुश्रुत ।
न स जानाति शास्त्रार्थं दर्वी पाकरस यथा ॥[2]

इति । अपिचास्मिन् विषये बहुभि बहुधा बहो कालाद्विचारितेऽपि यत —

यथालोक यथावेद लौकिके वैदिकेऽपि वा ।
यो वक्ता स परिग्राह्य प्राक्तनोऽद्यतनोऽपि वा ॥

इत्यभियुक्तोक्ति स्मृतिपथमधिरोहति ।

यतश्च—इहेदानींतना साधव केचन महामानसा मीमासका विश्रुत-विविधवृत्तान्तास्तत्त्वदिदृक्षव —‘ नीचा कलहमिच्छन्ति सन्धिमिच्छन्ति

1 विदुरनीति 2 सभापर्व 3 न्यायपरिशुद्धि

साधव ' इत्युक्तस्वभावा विविदिषन्ति सर्वेषा दर्शनाना रहस्य सामरस्यम्। तत एवास्माकमप्यस्मिन् विषये कचन करणव्यापारमुररीकर्तुं सत्यपि मतिविभवे तूष्णीं समवस्थानमनुचितमिति युक्त प्रकरणप्रक्रम ॥

(२) सिद्धान्त

तत्र प्रथम सामान्यत सिद्धान्तपदार्थं प्रकाशयाम—स्व स्व मतमास्थितै तैस्तै प्रामाणिकत्वेनाभ्युपगतोऽर्थ सिद्धान्त । स चाभ्युपगम अभिमानैकमूल परस्परविरोधात्। न चैव सति जगति सिद्धान्त एव कश्चिन्नास्तीति युक्त वक्तुम्। सिद्धान्ताभावसिद्धान्तस्य सिद्ध्यसिद्धिभ्या व्याघातात्। सति च सिद्धान्ते प्रमणप्रमेयव्यवहार । नोचेत् क्वचिदपि विवादविरहात् व्यवहारमात्रविलोपप्रसङ्गेन जातमौन जगत्स्यात्। पश्वादिष्वपि हि विवादो दृश्यते। अभ्युपगतो हि सर्वशून्यवादिभिरपि सावृतादिसज्ञात प्रमाणप्रमेयव्यवहार । तस्मादभिमानैकमूला सर्वोऽपि जगत्प्रवृत्तिरिति युक्तमभ्युपगन्तुम्। नचाभ्युपगमेनार्था क्रियन्ते, अनभ्युपगमेन निवर्तन्ते, इति कथ अभ्युपगमानभ्युपगमावुपपद्येयातामिति चेन्न। यत—अभ्युपगमो नाम स्वात्मसाक्षिक उपलम्भ । अनुभवे च विप्रतिपत्ति' शपथेनापि न निवार्यते। अनुभवाधीना च सर्ववस्तुसिद्धि । अत सर्वोऽपि व्यवहार अनुभव नातिपतितु प्रभवति। यतश्चोक्तमभियुक्तै—

परस्परपरिक्षोदात्परस्तादपि वादिभि ।
उपलम्भबले स्थेय तदादौ किं न गृह्यते ॥[1] इति ।

एतेनायमपि वाक्यपदीयन्यायो विनिर्धूत । यथा—

पदार्थाना स्वतो रूप न किंचिद्व्यवतिष्ठते ।
यथायथा निरूप्यन्ते भविष्यन्ति तथातथा ॥

[1] न्यायसिद्धाञ्जनम्

लक्षणाद्व्यवतिष्ठन्ते पदार्था न तु वस्तुत ।
उपकारात्स एवार्थ कथंचिदनुगम्यते ॥
यत्नेनानुमितोऽप्यर्थ कुशलैरनुमातृभि ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥

इति ॥ अस्याप्यर्थस्य यत्किंचित्सिद्धान्तरूपत्वादिति ॥

(३) अथ विरोधविचार

तत्र न तावत्सर्वोऽपि सिद्धान्त प्रामाणिक इति युक्तमभ्युपगन्तुम्, प्रतिपक्षविजयाभ्युपगमप्रसङ्गात् । नाप्यप्रामाणिक इति वक्तु युक्तम्, स्ववचनस्वसिद्धान्तस्वानुभवविरोधप्रसङ्गात् । सिद्धान्तप्रवक्तॄणा सार्वज्ञ्यविषये चेत्थमुक्तम्—

सुगतो यदि सर्वज्ञ कपिलो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतिभेद कथ तयो ॥[1]

इति । अन्यत्रापि—

जैमिनिर्यदि वेदज्ञ कपिलो नेति का प्रमा ।
उभौ यदि च वेदज्ञौ व्याख्याभेदस्तु किंकृत ॥[2]

इति । अत एव पूर्वे वैदिका जैमिनिशबरादय सार्वज्ञ्य सर्वत्रैव निराचक्रु । अपौरुषेयत्वेन च वेदस्यैकस्यैव प्रामाण्य स्वतो व्यवास्थापयन् । तत्सग्रहस्तु—

सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभि ।
य एव स्यादसर्वज्ञ स सर्वज्ञ न बुध्यते ॥[3]

इत्यादि । प्रत्याख्यात च तन्मतमौपनिषदैरुत्तरैर्वैदिकै । तत्सग्रहस्तु—

य एव स्यादसर्वज्ञ स सर्वज्ञ न बुध्यते ।
इति ब्रुवाणा सार्वज्ञ्य लभन्ता तन्निषेधत ॥[4]

1 हरदत्त 2 उदयन 3 कुमारिल 4 वेदान्ताचार्य.

इति । कैश्चिदत्रेत्थमुच्यते—

बुद्धान्तेवासिभिर्बुद्धे सर्वज्ञत्व प्रकल्प्यते ।
अपौरुषेयता वेदे वैदिकैरनुमन्यते ॥
लोकदृष्टिविरुद्धे ते उभे अपि च कल्पने ।
व्याप्तयाद्यभावादपि तु श्रद्धामात्रविजृम्भितम् ॥[1]

इति । इत्थ विरोधे जाग्रति सत्यस्त्येव विचारावकाशोऽस्माकमिति ॥

## (४) प्रमाणपरीक्षणम्

अथ सर्वस्यास्य विषयस्य जिज्ञास्यमानस्य प्रमाणाधीनसिद्धिकतया प्रमाणपरीक्षणमारम्भणीयम् । तत्र सामान्यतस्त्वित्थमाशङ्का—अथ प्रमाणाना परीक्षण नोपपद्यते, तद्धि प्रमाणै क्रियेताप्रमाणैर्वा[२] प्रमाणैरपि परीक्षितैरपरीक्षितैर्वा[२] । अप्रमाणै. न प्रमाणपरीक्षण शक्यक्रियम् । प्रमाणैरप्यपरीक्षितैस्तत्करणे केवलो व्यवहार एव तादृशै क्रियता, किं परीक्षणेन[२] परीक्षितैस्तु तत्परीक्षण अपर्यवसितमनवस्था प्रसङ्गात् इति ॥

अत्राभिधीयते—दृष्टे विषये प्रमाणपरीक्षा विनैव व्यवहार । अदृष्टे तु परीक्षा आवश्यकी, अगणितद्रविणवितरणानिरातिशयकायक्लेशादिसाध्यत्वात् कर्मतप प्रभृतीनाम् । तादृशादृष्टविषयकप्रमाणपरीक्षण तु परीक्षितेतरप्रमाणनिबन्धन स्वात्मानिवन्धन वेति नानवस्था नात्माश्रयता वा समावहति । व्यक्तीभविष्यतीदमुपरिष्टात् ॥

## (५) अथ प्रमाणप्रतिषेधप्रातिषेध

एव प्रमाणपरीक्षणे सिद्धे सामान्यतस्सर्वप्रमाणप्रतिषेधो दुश्शक । तथाहि—प्रमाणस्य प्रतिषेध प्रमाणतो वा स्यादप्रमाणतो वा[२] ।

[1] स्वतन्त्र

पूर्वत्र व्याघात, प्रमाणस्य सर्वस्य प्रतिषेधात्, तदर्थ च कस्य चित्प्रमाणत्वेनोपादानात् ।

ननूपक्रमापच्छेदपदाहवनीयन्यायेषु प्रमाणत एव प्रमाणबाधस्तान्त्रिकैरिष्यते । सत्य—न प्रमाणमात्र बाध्यते । येन व्याघात स्यात् । किंतु स्वेतरत्किंचित्प्रमाणम् । तथापि प्रमाणस्य सत कस्य चित्कथ बाध इति चेन्न । तत्प्रामाण्यमात्रस्यानपहारात् । प्रबलप्रतिरुद्धविशेषे हि प्रामाण्याभावस्समर्थ्यते । इह पुन कृत्स्नप्रमाणबाधाशक्यत्वमुच्यते ॥

उत्तरत्र व्याघातोऽतिप्रसङ्गश्च—यदि ह्यप्रमाणत प्रामाण्य प्रतिषिध्येत, तत्प्रतिषेधोऽपि तत एव प्रतिषिध्येत, त्वत्पक्षश्च सर्वै प्रतिपक्षै प्रतिक्षिप्येत । रज्ज्वादिबुद्धिश्च सर्पादिभ्रमैर्बाध्येत । कथ तर्हि सर्पभूदलनाम्बुधारादिबुद्धिषूत्तरोत्तरभ्रमेण पूर्वपूर्वभ्रमबाध ? उत्तरधिय पूर्वविपरीताकारावगाहित्वेन पूर्वभ्रमानुवृत्तिप्रतिरोधात् । नहि भूदळनबुद्धिबाधिततया तत्र सर्पस्य मिथ्यात्वव्यवस्थापन, तथासति रज्जोरपि तत्प्रसगात् । किंतु प्रमाणभूतेनाधिष्ठानयाथात्म्यज्ञानेन बाधितत्वात् । एव प्रमाणस्याप्यप्रमाणबाधितत्वमात्रेण न मिथ्यात्व स्यात् । तदेव प्रमाणतो वाऽप्रमाणतो वा प्रमाणपरिभवे व्याघातातिप्रसङ्गौ व्यवस्थिताविति प्रमाणप्रतिषेध सुदूरनिरोध ॥ इति ॥

## (६) अथ प्रमाणप्रामाण्यसिद्धि

तर्हि प्रमाणस्य प्रामाण्यसिद्धि स्वतोऽन्यतो वेति विकल्पो दुस्तरतामापद्यत इति चेन्न । यतो यथादर्शनमुभयथाऽपीति ब्रूम । स्वपरनिर्वाहकसमाधिना च स्वात्माश्रयानवस्थयोरपसरणम् । तथाहि—न हि वयमप्रमाणात्प्रामाण्यस्य सिद्धि ब्रूम, किंतु प्रमाणत ।

तत्र व्यक्तिभेदे तु प्रमाणान्तरात्प्रामाण्यसिद्धि । यथा–एतद्दृष्टमिद स्प्रक्ष्यामीति । यदा तु ईदृशी प्रमेति प्रमितिमात्र गृह्यते, ईदृश वा प्रमितिकरणमिति प्रमाकरणमात्र गृह्यते, तदा पुनरेकहेलया स्वस्वेतर-लक्ष्यसमुदायव्यवस्थापनान्नानवस्था नात्माश्रयो वा शब्दशब्दादिन्या-यात् । यथा–शब्दशब्द स्वात्मानमप्यवगमयति । धीरस्तीति बुद्धि स्वात्मानमपि विषयीकरोति । लक्षणलक्षण च स्वात्मानमप्यभिव्या-प्नोति । सर्वमित्यादिधीश्च स्वात्मानमप्यवगाहते । सर्वज्ञधीश्च स्वात्मान जानाति । दीपादिक च स्वपरप्रकाशक सर्वसमतम् । मन प्रभृतयोऽपि हि स्वान्यधीहेतवो दृष्टा । इति ॥

तर्हि प्रमाणादपि प्रमाणप्रतिक्षेपे स्वपरनिर्वाहकसमाधिना स्वा-त्माऽपि प्रतिक्षिप्यतामिति चेन्न । अविरुद्धविषयत्वात्स्वपरनिर्वाहस्य। यथा–

अह सत्य वदामीति स्वोक्ति स्वपररक्षिणी ।
न कदाचिद्वदामीति वादस्तु स्वोक्तिबाधित ॥
सर्वो विपश्चित्प्रयुक्त शब्द सार्थकतामियात् ।
इति वाक्यान्तस्थपदजात सार्थकमेव हि ॥
मानस्थापकमानस्य मानसक्षोभकस्य च ।
गतिरेवमिति प्रेक्ष्य त्यज्यता स दुराग्रह [1] ॥

नोचेत्कर्तव्याकर्तव्यवक्तव्यावक्तव्यविभागरहिततया सर्वेऽपि वादारम्भा विफला भवेयु ॥

ननु सर्वसक्षोभकस्य कथासक्षोभप्रसङ्गेनापि किमनिष्टमापा-दितम्[?] । एव वदत किंचिदनिष्टमस्ति वा न वा[?] । न चेत्प्रमाण-नियमपक्षो न दूष्य । अस्तिचेत् त्वद्वाक्यमात्रेण त्वत्पक्षो दुष्ट इत्यनिष्टमापादितमेवेति ॥

[1] वेदान्ताचार्य

## (७) अथ दर्शनानि

इत्थं प्रमाणप्रामाण्यनिबन्धनान्येवैतानि सर्वाण्यपि वैदिकान्यवैदिकानि च दर्शनानि, सर्वज्ञत्वेनाभ्युपगतैः प्रतीतैः परममहर्षिभिः सदृष्टानीति च सुगृहीतमेतत् । तत्र प्रथमं दर्शनं लौकायतम् । तदर्थश्च—

प्रत्यक्षाल्लोकशब्दोक्तादधिकं च तदायतम् ।
अभाष्यत भवत्पूर्वैः प्रत्यक्षं चार्थसाधकम्[1] ॥

इति सर्वार्थसिद्धिवचनेन प्रत्यक्षमेकमेव प्रमाणं, तेन च सर्वदर्शनापेक्षयाऽधिकं प्रमाणतममिदं दर्शनमिति प्रत्यक्षैकप्रामाण्यवादिमतमित्यवधार्यते । तस्यैतस्य शास्त्रस्य प्रवर्तको धीमान्निदर्शनतया प्रसिद्धः साक्षात्सुरगुरुः । तस्य च सर्वज्ञत्वे नैवास्ति काचिद्विप्रतिपत्तिः कस्यापि पुरुषस्य ॥ इति ॥

ततश्च सौगतं दर्शनं, तत्रावान्तरप्रभेदास्त्वधिकारिभेदनिबन्धना इत्यविप्रतिपन्नम् । प्रवक्ता चास्य सुगतो बुद्धः । स च सर्वज्ञ इत्येव प्रसिद्धो नाम्नाऽपि ॥

अर्हन् खल्वभिधानेनैव पूज्यः । तस्य च सर्वज्ञत्वं सर्वज्ञावतारत्वेन सिद्धमिति तदीयसंप्रदायप्रमाणप्रसिद्धं, सर्वेषामर्हणीयमेवेदं दर्शनम् ॥

कपिलपतञ्जली तु महानुभावौ वेदोपबृंहणभूताभ्यामेवेतिहासपुराणाभ्यां प्रशंसितौ सर्वविदितौ च । तदीयं च दर्शनं कापिलं पातञ्जलं चेति सुप्रसिद्धं, नैवात्र बहु वक्तव्यमस्ति ॥

कणचरणाक्षचरणौ पुनः वेदप्रामाण्ये सरण्यन्तरं प्रतिपन्नावपि वैदिकत्वेनैव प्रथितौ । एताभ्यामेव च महानुभावाभ्यां निष्प्रतिद्वन्द्वं प्रसाधितं परमेश्वरं सर्वज्ञं सर्वशक्तं समुपास्य सर्वेऽपि सौभाग्यवन्तो भवन्ति ॥

---

[1] वेदान्ताचार्य

जैमिनिबादरायणौ हि सर्वज्ञमूर्धन्याविति सर्ववैदिकसमति । एतयोरेव दर्शनमनादिपरपरासिद्ध महाजनपरिगृहीत कालतो देशतः स्वभावतश्च समुत्कर्षसमलङ्कृतम् । इदमित्थ प्रकाशते—

वेदाचार्यसमाहारात् पूर्वाचार्यमतत्वत ।
परिग्रहातिशयत शेते दर्शनमूर्धनि ॥

इति । इत्थ पाशुपतादिदर्शनाना प्रवक्तारो महीयासो देवा देवदेवाश्चापि भवन्तीत्यलमनेन विदितनिवेदनेनेति ।

## (८) अथायमवसर

एव महानुभावै प्रवर्तितानि दर्शनानि कथ मिथो विरुद्धानि भवेयु । विरोधे वा परस्परपरिक्षोदान्नैकत्रापि विश्वास स्वात्मान लब्धुमर्हति मध्यस्थधिया तत्त्वचिन्ताचतुराणाम् । परिग्रहातिशयादिक तु तत्र तत्र श्रद्धामूल नैकत्र विशिष्यते । प्रामाण्यव्यवस्थापन प्रतिस्व यथामतिविभव यथालोक यथाशास्त्र चाद्यापि न विश्राम्यति । केचिच्च सर्वत्राप्रामाण्यमतिशङ्कय स्वयमपि विनष्टा भवन्ति । इदमेव वा प्रपञ्चस्य पारमार्थिक स्वरूपम्, अयमेव वा ससारसम्प्रदाय , इयमेव वा परमेश्वरस्य सर्वज्ञस्य सर्वशक्ते परमकारुणिकस्याज्ञा, इत्थ विचिन्तयन्तोऽप्युदासते महान्त कियन्त ॥

अस्य च निरर्गलस्य प्रवाहस्य सुन्दोपसुन्दन्यायमनुसरतोऽस्ति किं कश्चिदुपशमोपाय , इत्येवमवाङ्मनसगोचरमानितरकथनीय वैक्लब्यमात्मैकसवेद्यमवलम्बमाना केचन महीयासो भूयासस्साधव परिपृच्छन्ति ॥

## (९) तत्रायमेक सामरस्योपाय

तत्र केचनेत्थमुच्चरयन्ति, तथाहि—शब्दानामर्थान्तरपरिकल्पनलक्षणेन वैदुष्येण सौगतादीनामवैदिकानि दर्शनानि वैदिकदर्शनानु-

गुण्येन नेयानि । ततश्च सुखेन सर्वाण्यपि दर्शनान्यैकरस्येन नेतु शक्यानीति । तत्र दिङ्मात्र प्रदर्शयामो विस्तरभयात् । यथा— क्षणिकशब्द क्षणपरिणामित्वपर । चित्तसततिशब्द चित्तस्याविच्छेद-पर , नित्यज्ञानरूप आत्मेत्यर्थ । वेदा न प्रमाणमिति च उक्तप्रमाण-विलक्षणा इत्यर्थ । तेषा पौरुषेयत्व च पूर्वपुरुषैरधीतत्वमेव। अर्थान्तराणि तु व्याख्यातृबुद्धिदोषमूलानि न तु सुगताद्यभिमतानीति । एवमेवेतर-त्सर्वं सूक्ष्मेक्षिकया सगमयितव्य बुद्धिमद्भिरिति ॥

सोऽय विरोधशमनप्रकारो विपरिवर्तेनापि शक्य कर्तुमिति वैदिकान्यप्यवैदिकानि भवेयु । ततश्च पुनरप्यव्यवस्थागर्तनिपात एवेति नैत पन्थान विद्वासस्समाद्रियन्ते ॥

### (१०) अपरोऽयमुपाय

अपरे त्वित्थमाचक्षते—मुनीना च हृदय मुनय एव जानन्तीति प्रवादे सत्यपि भगवता बादरायणेन महर्षिणा ऐदपर्येण शारीरकशास्त्रे कपिलाद्यागमानामप्रामाण्य प्रत्यपादि । महाभारतादिष्वितिहासपुरा-णेषु तु—

एव तत्त्वमिद कृत्स्न साख्याना विदितात्मनाम् ।
यदुक्त यतिभिर्मुख्यैः कपिलादिभिरीश्वरै ॥
यस्मिन्न विभ्रमा केचिद्दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ॥

इत्यादिना बहुश प्रशसित कापिल मतम् ॥

सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ।
यथागम यथान्याय निष्ठा नारायण प्रभु ॥
तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिण ।

इत्यादिना च साङ्ख्ययोगपाशुपतादीनामपि नारायणनिष्ठत्व प्रतिपादितम्। एवचादिवक्तृषु भ्रमे प्रतिषिद्धे मतभेदस्य चावान्तरवक्तृमूलत्वे चानुपपन्ने अर्थविरोध सूत्रकारेण तन्निरसन च कथ घटते ? इत्याक्षेप प्रापय्येत्थ समादधते ॥

यथा–भ्रमादिदोषरहितानामपि वक्तृणा तदा स्वविवक्षितात् अधिकस्यार्थान्तरस्याकथन विवक्षितेऽर्थे प्ररोचनार्थोऽतिवादश्च सभवत, यथा निर्दोषस्यापि वेदस्य। न हि वेदो दर्शपूर्णमासप्रकरणे वाजपेय प्रशसति। नापि कर्मप्रकरणे ब्रह्म प्रतिपादयति। अतिवदति च प्रतिपिपादयिषितमर्थे 'अक्षय्य ह वै चातुर्मास्ययाजिनस्सुकृत भवति, 'नकिरिन्द्र त्वदुत्तर, न ज्यायानस्ति वृत्रहन्' इत्यादिना। नचैतावता वेदस्य कर्मान्तर तत्त्वान्तर चानभिमतमितीष्यते। अन्यत्र वेदेनैव कर्मान्तरतत्वान्तरप्रतिपादनात् ॥

एव कपिलादयोऽपि स्वविवक्षितादधिक तदानीं न वदन्ति। विवक्षित चातिवदन्ति। साङ्ख्यशास्त्रे प्रकृतिप्राकृततत्त्वविवेकमात्रस्य विवक्षितत्वादधिकाप्रतिपादनम्। नास्मात्पर किंचिदित्यतिवादश्च। योगे च यमनियमाद्यङ्गकस्य समाधिपर्यन्तस्य योगस्य, तत्र ध्येयभूतेश्वरस्य क्लेशकर्मादिदोषास्पर्शस्य च प्रतिपिपादयिषितत्वाज्जगत्कारणत्वाद्यनुक्ति। नैतावता तद्वक्तृणा ब्रह्मकारणत्वमनभिमत भवति। अन्यत्र कपिलासुरिसवादब्रह्मरुद्रसवादादिषु कपिलहिरण्यगर्भादिभिरेव ईश्वरस्य तत्कारणत्वस्य च प्रतिपादितत्वात्। एवमन्येष्वप्यागमेष्वभ्यूह्यम्। सर्वत्रैषा विहिता रीति ॥

एवमबाहुश्रुत्येन तद्वक्तृणा हृदयमजानन्त आपातप्रतिपन्नमेवार्थं तात्विकमुपपन्न मन्वाना तार्किकमन्या ये प्रत्यवतिष्ठन्ते तेषामुपदेशमात्रेण वशीकार्यत्वाभावात् साङ्ख्याद्यागमानामापातप्रतिपन्नार्थपर-

त्वमन्वारुह्य सूत्राकारैस्तन्निरसन युक्तम्, मीमासाशास्त्रस्य न्यायनिब-न्धनत्वात् ॥

इतिहासपुराणाना तु उपदेशप्रधानत्वात्तर्ककार्कश्य विहाय प्रधा-नार्थाविरोधेन कपिलादीना साख्याद्यर्थप्रतिपादनमपि युक्तम् । 'तमेव शास्त्रकर्तार प्रवदन्ति मनीषिण ' इति वचन च प्रबन्धान्तरेषु कपिला-दिभि परब्रह्मतत्कारणत्वादिप्रतिपादन निष्ठानिर्णयहेतुत्वेन वदति । भ्रमाभावश्च अतिवदनातिरिक्ततत्त्वविषय इति सर्वं सुसगतमिति ॥

एष एव प्रकार औपनिषदानामुपादेय । इतरथा उपनिषदा तद-र्थनिर्णायकस्य च शारिरिकस्य शास्त्रस्य तदुपबृहणाना चासगतत्वापात इति ॥

अत्र परीक्षका इत्थमभिप्रयन्ति—एतादृशमेव पन्थान मार्गद-र्शिमहार्षिप्रदर्शितमाश्रित्य स्व स्व सिद्धान्त प्रधानीकृत्य तदितरसिद्धा-न्ताना तदानुगुण्यस्य सुसपादत्वात् पुनरपि स एवाव्यवस्थादोषो दुरात्मा जीवत्येवेत्ययमपि मार्ग न रोचते विद्वद्भ्यो बहुविद्भ्य ॥

### (११) अथान्योप्यसावुपाय

अन्ये पुनरित्थ पुराणमेव पठन्ति—पद्मपुराणे २६३ अध्याये उत्तरखण्डे भगवान्—

त्व हि रुद्र महाबाहो मोहनार्थे सुरद्विषाम् ।
तामसानि पुराणानि कथयस्व च तान्प्रति ॥
पाषण्डाचरण धर्मं कुरुष्व सुरसत्तम ।
मोहनानि च शास्त्राणि कुरुष्व च महामते ॥
अहमप्यवतारेषु त्वा च रुद्र महाबल ।
तामसाना मोहनार्थं पूजयामि युगे युगे ॥

कणाद गौतम शक्तिमुपमन्यु च जैमिनिम् ।
कपिल चैव दुर्वास मृकण्डु च बृहस्पतिम् ॥
त्वच्छक्त्या सन्निविष्टास्ते तमसोद्रिक्तया भृशम् ।
तामसास्ते भविष्यन्ति क्षणादेव न सशय ॥

पार्वती—

तामसानि च शास्त्राणि समाचक्ष्व ममानघ ।
सम्प्रोक्तानि च यैर्विप्रै भगवद्भक्तिवर्जितै ॥
तेषा नामानि क्रमश समाचक्ष्व सुरेश्वर ।

रुद्र —

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषा स्मरणमात्रेण पातित्य ज्ञानिनामपि ॥
प्रथम हि मया प्रोक्त शैवपाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रै प्रोक्तानि च तत शृणु ॥
कणादेन तु सम्प्रोक्त शास्त्र वैशेषिक महत् ।
गौतमेन तथा न्याय साख्य तु कपिलेन वै ॥
धिषणेन तथा प्रोक्त चार्वाकमतिगर्हितम् ।
दैत्याना नाशनार्थाय विष्णुना बुद्धरूपिणा ॥
बौद्धशास्त्रमसत्प्रोक्त नग्ननीलपटादिकम् ।
मायावादमसच्छास्त्र प्रच्छन्न बौद्धमुच्यते ॥
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ।
वेदार्थवन्महाशास्त्र मायया यदवैदिकम् ॥
मयैव रक्ष्यते देवि जगता नाशकारणात् ।
द्विजन्मना जैमिनिना पूर्वं वेदमपार्थकम् ॥
निरीश्वरेण वादेन कृत शास्त्र महत्तरम् ।

शास्त्राणि चैव गिरिजे तामसानि निबोध मे ॥
पुराणानि च वक्ष्यामि तामसानि यथाक्रमम् ॥

इत्यादि ॥ एतादृशपुराणपारायणमपि पुराणान्तरपारायणेन शक्य प्रतिवक्तुमिति न मीमासकास्तत्र रसिका भवन्ति ॥ अपिच—

साख्यप्रवचनभाष्ये श्रीमद्विज्ञानभिक्षुणा कृतिना ।
सश्रित्य सरणिमेता डिण्डिमताडनमकारि विजयाय ॥

(१२) इयमपरा समरसभावधोरणी

आत्मविज्ञान मोक्षसाधनमिति सर्वत्र जयदुन्दुभि । उपास्यमाने च तस्मिन्नात्मनि प्रथम बहिरर्थ एव भासते । यमाश्रित्य धर्ममीमासोपसहार । चार्वाकमतसमुत्थान च । तत्प्रतिपादनार्थं 'पराञ्चि खानि' इत्यादि । तद्धानार्थं 'पर कर्मभ्य ' इत्यादि ॥

अथार्थाकार । यमाश्रित्य त्रैदण्डिकमतोपसहार । योगाचारसमुत्थान च । तत्प्रतिपादनार्थं 'आत्मैवेद सर्वम्' इत्यादि । तद्धानार्थं 'अगन्धमरसम्' इत्यादि ॥

अथार्थाभाव । यमाश्रित्य वेदान्तद्वारमात्रोपसहार । शून्यत्वनैरात्म्यसमुत्थान च । तत्प्रतिपादनार्थं 'असदेवेदमग्र आसीत्' इत्यादि । तद्धानार्थं 'अन्ध तम प्रविशन्ति, येके चात्महनो जना ' इत्यादि ॥

ततो विवेक । यमाश्रित्य साख्यमतोपसहार । शक्तिसत्त्वसमुत्थान च । तत्प्रतिपादनार्थं च 'प्रकृतेः परस्तात्' इत्यादि । तद्धानार्थं 'नान्यत्सत्' इत्यादि ॥

तत केवल आत्मा प्रकाशते । यमाश्रित्याद्वैतमतोपसहार । तत्प्रतिपादनार्थं च 'न पश्यतीत्याहुरेकीभवति ' इत्यादि । तद्धानार्थं 'नाद्वैत नापिच द्वैतम्' इत्यादि ॥

ततस्समस्तसंस्काराभिभवात्केवलोऽपि न विकल्प्यते। यमाश्रित्य चरमवेदान्तोपसंहारः। तत्प्रतिपादनार्थं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादि ॥

सा चावस्था न हेया, मोक्षनगरगोपुरायमाणत्वात्। निर्वाणं तु तस्यास्स्वयमेव। यदाश्रित्य न्यायदर्शनोपसंहारः। तत्प्रतिपादनार्थं च 'अथ योऽकामो निष्काम आप्तकाम आत्मकामस्स ब्रह्मैव सन् ब्रह्माप्येति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्ते' इत्यादि ॥

तस्मादभ्यासकामोऽपि अपद्वाराणि विहाय पुरद्वारं प्रविशेत्। यतो मार्गविमार्गसंसर्गसमोहमाशङ्कमानैरुच्यते 'लक्ष्येण धनुषा योगः' इत्यादि ॥

औदयनमयनमेतत् परिवर्तसहं, न जातु विबुधानाम्।
स्वान्तोल्लासनिदानं तस्मादस्मिन्ननादरोऽस्माकम् ॥[1]

### (१३) अयमेव पञ्चमोपायः

प्रेक्षावन्तः परीक्षकाः पुनरित्थं समाकलयन्ति सामरस्यम्—इह विचित्राधिकारिपरिपूर्णे जगति—प्राणिनां द्वयी दृष्टिः लौकिकी वैदिकी चेति। केवलां लौकिकीं तां नास्तिकानां दृष्टिमाहुः। केवलां च वैदिकीं जडानामेव दृष्टिमाहुः। लौकिकदृष्ट्युपसर्जनां वैदिकीमास्तिकानां दृष्टिमाहुः। तदेव च दर्शनमित्युच्यते ॥

### (१४) वेदपदार्थः

तत्र लोकस्सुप्रसिद्ध एव। वेदस्तु कश्चित्पारमेश्वरोऽभिप्रायविशेषः। स च सर्वेषु देशेषु सर्वेषु कालेषु सर्वेषु पुरुषेषु सर्वास्वप्यवस्थासु अविपर्यस्तस्वभावः सर्वविधश्रेयस्साधनभूतः प्रवर्तको निवर्त-

---

[1] आत्मतत्त्वविवेकमार्गः

कश्च । विद ज्ञाने इति हि धातु । तादृशाभिप्रायव्यञ्जकश्शब्दराशिरपि तादर्थ्यात्ताच्छब्द्य लभते । त चाभिप्राय साक्षात्परमेश्वर महापुरुषान-नुप्रविश्योपादिशति । तपोविशेषाच्च साक्षात्कृतवन्तो महान्तो महर्षय-श्चानुगृह्णन्त्यस्मान् तदभिप्रायव्यञ्जकेन वर्णसमूहेन ॥

लोकेऽपि हि कश्चनाभिप्राय कदाचित्कस्मैचिदभिव्यञ्जयितु बह-वस्साधनविशेषास्सन्ति समभ्युपेता । तत्र शब्दलक्षणा केचित् । तत्रापि ध्वनिलक्षणा वर्णलक्षणा इति प्रभेदा । तिर्यक्षु ध्वनिल-क्षणा । इतरत्रोभयलक्षणाश्च । तथा लिपिलक्षणा केचित् । केचिच्च चेष्टालक्षणा । केचिच्च मुखप्रसादमुखमालिन्यलक्षणेङ्गितलक्षणा । एतावत्सूपायेषु को नित्य कश्चानित्य इति विवेको न रोचते परीक्ष-केभ्य । तत्र प्रथममुपाय कार्यकारणयोस्तादात्म्यलक्षणोपचारेण नित्य-मिति व्यवहरन्ति शिष्टा इति वस्तुस्थिति । तादृशमेवाभिप्रायमवगम-यितुमियान् ग्रन्थविस्तर । ततश्च सर्वमपि तादृश साधन वेदशब्द-वाच्य शास्त्रशब्दवाच्यमिति महामीमासकाना राद्धान्त ॥

सूचितश्चैषोऽभिप्राय नयविदामाचार्येणोदयनाचार्येण न्यायकुसु-माञ्जलौ —" उत्पत्तितोऽभिव्यक्तितोऽभिप्रायतोवाऽनवच्छिन्नवर्णमात्रस्य निरर्थकत्वात् " इति वाक्येन । तथा कवितार्किकसिंहेन वेदान्ताचार्येण च तत्त्वमुक्ताकलापे—" आज्ञारूपत्वमासा न च गलति विभोरेकरूपा-भिसन्धे " इति सूक्त्या चेति ॥

## (१५) लोकस्थिति

सुप्रसिद्धेषु लौकिकेषु वैदिकेषु सर्वेषु व्यवहारेषूपादातव्येषु सत्सु लोकस्वरूपे शास्त्रस्वरूपे च परिश्रान्तेन भवितव्य धीमता जीवता पुरुषेण । यद्यपि लौकिको व्यवहार पश्वादिव्यवहारेण

समान इति निरूपका प्राहु । तथाऽपि तादृशनिरूपणाधिकार-सपत्ति पश्चादिवदेव व्यवहर्त्रा सपाद्या भवति जगति मनुजेन ॥

शास्त्रस्वरूपे हि यै कैश्चिदपि पुरुषै कुशलमन्यैर्भवितु शक्यम्, बाधानुपलम्भात् सवादानुपलम्भाच्च । लोकस्वरूपे तु पुरुषधौरेयेणापि समदर्शिनाऽपि महताऽपि प्रयत्नेन कुशलेन न भवितु शक्यम्, सर्व-समानानुपलम्भात् । एव सर्वसम्मत्यभावेऽपि यथाकथचिल्लोकव्यवहार-विधुरस्य नैव शास्त्रव्यवहारस्सपनीपद्यते । लोको हि विचित्रदेशप्रभेद-भिन्न विचित्रकालप्रभेदपरीच्छिन्न विचित्राभिप्रायशालिपुरुषपरिपूर्ण । अत्र सर्वेषा देशाना कालाना पुरुषाणा च समान कश्चित्तादृशो नैवासीन्नैवास्ति नैव भविष्यतीति सर्वेऽप्यध्यवस्यन्ति ॥

## (१६) धर्मशक्तिव्यञ्जकत्वम्

अथैवसति सर्वसामञ्जस्य रहस्यमेव स्यान्न तु सदस्यामिति चेन्न । सर्वदेशकालपुरुषानुयायी समानो धर्मस्समुपलभ्यते यत । अथ कोऽसौ समानो धर्म ? धर्म एव सकलोपादेयतया पुण्य अनु-पादेयतया च तद्विपरीतम् । ननु तदपि विचित्रम् । न विचित्रम् । स्वरूपवैचित्र्येऽपि शक्तयैक्यात् । स्वरूपमात्रदर्शिन केचित् परस्पर-व्यभिचारोपलम्भात् परस्पर नास्तिका, पुण्यशून्या इत्यभि-मन्यन्ते ॥

पुण्यस्य च द्वयी शक्ति लोकव्यवहारानुकूला शास्त्रव्यवहारानु-कूला चेति । तत्र लोकव्यवहारानुकूल्यरहित शास्त्रव्यवहारानुकूल्य-मात्र पश्यन्त वयमेव पुण्यवन्त आस्तिका इति केचिन्मन्यन्ते । नैव तत्पुण्य, नैव च ते पुण्यवन्त । नापि च ते आस्तिका । केचिच्च तद्विपरीत पश्यन्ति । ततोऽपि न तत्पुण्य, न ते पुण्यवन्त, नैव

चास्तिका । उभयाकार च ये पश्यन्ति तदेव पुण्य त एव पुण्यवन्त त एव चास्तिका , त एव महान्त ॥

तत्रोभयविधशक्तिदृष्ट्या पुरुषेणावश्यमनुष्ठेय सर्वे कर्म पुण्य भवति। तत्र चोभयविधशक्तिसमुद्भवम्तूत्कटरागपरित्यागेन अभिव्यज्यते तेन च लोकानुग्रह शास्त्रानुग्रहश्च सेत्स्यति । तत्राय सग्रह —

सर्वानर्थोत्पत्तिहेतो आम्थाया विनिवृत्तये ।
उपायम्योपदेशाय दर्शनाना समुद्भव ॥
दुख स्वलक्षण शून्य क्षणिक सकल जगत् ।
इत्येव भावना सत्या सौगता प्रत्यपादयन् ॥
अणिमादिकमैश्वर्य योगेनात्र, परत्र तु ।
कैवल्य च विरक्तस्य प्राहु पातञ्जला पुन ॥
प्राहुस्साख्यास्सत्त्वपुसोस्सत्ययो परमार्थत ।
अन्यताख्यातिमात्रेण सर्वानर्थपरिक्षयम् ॥
अलौकिकसुखोपायसमुद्देशोपदेशत ।
जैमिनीया प्रपञ्चेऽस्मिन् सर्वामास्था न्यवारयन् ॥
विनश्वरस्वभावेऽस्मिन् प्रपञ्चे सुखसाधनम् ।
सर्वं विनश्वर दु खमित्यक्षचरणेक्षणम् ॥
अशेषम्य विशेषस्य निरन्वयविनाशत ।
आत्मानमुद्धरेत्प्राज्ञ इति काणादफक्किका ॥
सकल खल्विद ब्रह्म तज्जलानिति शान्तताम् ।
आसाद्य विषया हेया इति वेदान्तभूमिका ॥
ब्रह्मण्यध्यस्तमखिल तद्ब्रह्म परमार्थत ।
निर्विशेषमिति त्वत्र शाङ्करी रीतिरीदृशी ॥
ब्रह्मशेषत्त्वैकरूपमखिल परमार्थत ।

स्वशेषत्वादिधीस्त्याज्येत्याह रामानुजो मुनि ॥
ब्रह्माधीनमिद सर्वं स्वस्वरूपानुसारत ।
स्थातव्य यतितव्य चेत्यध्वा मध्वमुनेरयम् ॥
एव सर्वेषु सिद्धान्तेषूत्प्रेक्ष्य परमार्थत ।
रागत्याग पर तत्त्व समुद्‌घुष्यन्तु सूरय ॥ इति ।

एव सर्वसिद्धान्तानुसारिणा रागत्यागेन परिकर्मित स्व स्व धर्ममनुतिष्ठता महता लोकयात्रा निरर्गळा शास्त्रयात्रा विवृतद्वारेति किमिद सदस्य रहस्य वा विमृशन्तु विद्वास ॥

## (१७) सदाचार

एतादृशधर्मशक्तिस्थिरीकरणायैव सत्यदयादाक्षिण्यादय सर्वदेशदशाकालेष्वेकरूपा साधारणा सर्वैरपि शास्त्रैर्विधीयन्ते। तदेतदनुरुध्य उभययात्रानिर्वहणमेव सदाचारशब्दाभिधेयम् ॥

सदाचारेण चैतेन सर्वसपत्समृध्यति ।
इति सर्वेऽपि मुनय विरुवन्त्यूर्ध्वबाहव ॥

अत एव सर्वज्ञमाधवेन "दयादाक्षिण्यविनयाद्यन्वितो वृत्तविशेष आचार इत्युक्त भवति"[1] इत्युक्तम् । अतएव च वैदिकावैदिकव्यवहारभेदभिन्नसकलदर्शनानुयायिषु पुरुषेषु यागदानहोमतप प्रभृतीनि पुण्यकर्माणि विशेषतो विभिन्नानि सामान्यतोऽनुगतानि यथायथमनुष्ठेयतया परिगृहीतान्युपलभ्यन्ते । यागादिपदार्थनिर्वचन तु यथास्व सर्वैरेव कृत क्रियते करिष्यते च इति ॥

## (१८) बुद्धिवृत्त्यनुवर्तनम

लोको हि विविधवासनावासितपुरुषार्थाभिलाष्यधिकारिसमाहार । सर्वेष्वपि वैदिकेषु लौकिकेषूपायेषु अधिकारिबुद्धिवृत्ति अनु-

[1] पराशरस्मृति

रुध्यते लोकसन्तानकारिभि देशकालवेदिभि महात्मभि । अधिकारिभेदो दृष्टिभेदो वा विरोधभञ्जक इति सर्वत्र जयदुन्दुभि । यदेकमेव वस्तु महीधरो महीरुहो वा देशकालदशाभेदभिन्नै निरूपकैरपि निरूप्यमाण न खलु शक्य कार्त्स्न्येन प्राप्तु एकदेशेन वा हातुम् । एव सर्वलोकविदितेऽपि विषये सति विमतिविषये किमु वक्तव्य लोकोत्तरे विषयविशेषे । तस्मादनुभवभेद परिग्रहभेदश्चेत्यादि सकलोऽपि कोलाहल इति ॥

तथाच तत्तादृशदेशकालदशाभेदेनातिवदनविवदनसकलितानि दर्शनानि प्रवृत्तानि प्रवर्तितानीति वा परीक्षकविवेको मानसमाकर्षति स्वेषा परेषा विदुषा द्विषामविदुषामपि ॥

ते ते चाधिकारिण यथासप्रदाय यथारुचि यथामति तानि परिगृहीतवन्त । आदावेवैतान्येतावन्ति परिष्कृतानीति वचन विवचन भवति । तत प्रचयगमनकारिण भाष्यवार्तिककारादय परस्परपरिक्षोदात् विस्तरयामासु ॥

अत एवैतानि दर्शनान्येतावताऽपि कालेन जीवितानि धरन्ति । इदमेव हि परम सौभाग्य भारतधरित्र्या । यस्मादेव प्राञ्चोऽर्वाञ्चो विद्वास शान्तिरस सर्वत प्रवाहयन्ति । नात्रेत पर निवेदनीयमस्ति रसिकशिरोमणीनामित्युपरम ॥ इति ॥

## (१९) अभिन्नरूपोद्देश्यत्वम्

उद्देश्य च फलम्, तच्च निवृत्तिलक्षणम् । तादृशमेव प्रयोजन सर्वेऽपि दर्शनकर्तार भूमिकान्तरपरिग्रहेण प्रतिपादयन्ति । तथाहि— असत् अळीक शून्य तुच्छ अभावो मिथ्या अध्यस्त आरोपित कल्पित निस्स्वभावो निषेध निवृत्ति इत्यादयश्शब्दा, प्राचुर्येण

प्रयुज्यमाना कचन अर्थमवबोधयन्ति। स च सापेक्षो निरपेक्ष इति द्विविध। तत्र सापेक्षा निवृत्तिं केचिदैच्छन्। केचिच्च निरपेक्षाम्। देशत कालत वस्तुतो वा परिच्छेदराहिता निवृत्ति कस्य चित् साध्य कस्य चित् साधन वा न भवितुमर्हति, अनलीकत्वाद्यापत्ते। स एव चार्थ' परमार्थ। तदापत्तिरेव सर्वस्य स्वाभाविक रूपम्। व्यवहारस्तु सर्वोऽपि सांवृतिक। निदर्शन चात्रोभयत्र स्वप्नसुषुप्ती। एतादृश एव तत्त्वोपदेश पुसा हृदयमावर्जयतीत्येष सौगताना सर्वानित्यत्वमिथ्यात्ववादिना वैनाशिकापरनामधेयाना निरन्वयोत्पत्तिविनाशवादिना राद्धान्त। निवृत्तिकोटिपराकाष्ठेयम्॥

एतेषामेव साक्षात्प्रतिपक्षा कापिला पातञ्जलाश्चापि। ते खलु सर्वेषा नित्यत्व सत्यत्व चाभ्युपगम्य सर्वस्यापि लौकिकव्यवहारस्य आत्मानुविद्धस्य भेदाग्रहमूलस्य सत्त्वपुरुषान्यताख्यात्या आत्यन्तिकीं निवृत्तिमात्मन्यङ्गयकार्षु। अर्धकापिला पातञ्जला। अर्धपातञ्जला कापिला इति च तेषा व्यवहार। तेऽपि निवृत्तिदृष्टय एव॥

औलूक्या आक्षपादा पुन सत्यानामेव सता सर्वेषा केषाचिन्नित्यत्व केषाचिदनित्यत्व चाभ्युपगम्य अनित्यानामागन्तूना निवृत्तिमध्यवसन्नु। अतएवैतेषा अर्धवैनाशिका इति व्यपदेश। अनयोश्च तन्त्रयो एक प्रमेयशास्त्र अपर प्रमाणशास्त्र, उभय चैकतन्त्रमिति प्राचा वचनम्॥

तच्चैकतन्त्रय अर्वाग्भि व्याख्यातृभि परिकल्पितमिति न्यायपरिशुद्धिकृत प्राहु। पीलुपाक–शब्दोपमानपृथक्प्रामण्याद्यनभ्युपगम' काणभक्षाणा सौगतसौहार्दातिशय इति तेषा हृदयम्। तेषा वैशेषिका इति व्यवहारस्तु विशेषपदार्थाभ्युपगम–साधर्म्यवैधर्म्यलक्षणपरस्परविशेषा-

भ्युपगमादिनेति बहव । परीक्षकास्तु—जगदारम्भहेतुभूत प्रकृतिशब्द-वाच्य नित्य निर्विशेषमेक वास्त्विति साङ्ख्याभ्युपगम । गन्धर-सादिविशेषसहित नित्यमनेक परमाणुशब्दवाच्य जगदुपादानमिति औलु-क्याभ्युपगम । विशेषपद च प्रचुरप्रयोगाद्भूतपरमित्यवमीयते। तावन्मात्रे विश्रान्ता एते इति कापिलानामालापोऽयमिति निर्णिनीषन्ति । नेषा-मुभयेषा निरन्वयोत्पत्तिविनाशवादिनामागन्तुकविशेषशून्यनित्यविभुस्व-रूपस्थिति निवृत्तिस्थितिरेवेति निवृत्तिनिष्ठैवेयम् ॥

आर्हतास्त्वावरणभङ्गवादिन निवृत्तिपरायणा एवेति विस्तृत-मन्यत्र । किंचैषा विरोध एव विरुद्ध इति सर्वं समरसमेवैतेषाम् । यथोक्तम्—

अन्योन्यपक्षप्रतिपक्षभावात्
परस्पर मत्सरिण प्रवादा ।
नयानशेषानविशेषमिच्छन्
अपक्षपाती समयस्तथाऽर्हत ॥ इति ॥

पूर्वे खलु मीमासका अचेतनदेवतावादिन अर्धलोकायता इति व्यवहारभाजनभूता सर्वस्वपरित्यागेनाऽपि वेदप्रामाण्यसाधनतत्परा इहैव सर्वेषा निवृत्तिमुपदिशन्ति । लोकोत्तर च किंचन सुखमिच्छन्ति । तस्यापि दातार देश वा कल्पनाभयेन परित्यजन्ति । यथा—

विग्रहो हविरादान युगपत्कर्मसन्निधि ।
तृप्ति फलप्रदत्व च देवताना न विद्यते ॥ इति ॥

अत एवैतेषा लौकायतेषु प्रवेश केचिदुत्तरे मीमासका प्राहु । तमेत प्रवाद परिजिहीर्षव व्याख्यातार तुतातित (कुमारिल) भूषणप्रभृतय महान्त परिश्रममुपाददाना अपि अजहत्स्वभावा एवाभूवन् । तथाहि—

उपाख्यानेषु नातीवादर कर्तव्य इति वदन्ति । देशकालपरिज्ञानविधुरा इव स्वमेव नासिकाग्र संप्रेक्षमाणा भारतकथाप्रधानदेवता द्रौपदीं सवसनामपजिहीर्षन्ति । दशरथनन्दनस्य श्रीमतो रघुनायकस्य सीताप्रस्थानानन्तर कन्या दातुमिच्छान्ति । धृतराष्ट्रस्य दृष्टिं प्रयच्छन्ति। भीष्माचार्यस्यास्खलितमपि ब्रह्मचर्य व्याकुलयन्तीत्यलमेतावतैतेषामभिजन्मरहस्यप्रकाशनेन ॥ [1]

बादरायणसिद्धान्तस्तु यद्यपि भगीरथमनोरथ इव बहुमुख प्रसृत , तथाऽपि कश्चित् सर्वानुगत परमार्थोऽर्थस्तिष्ठत्येव । येयमविद्यानिवृत्ति । सैवच अस्माकमिदानीमुपादेयसरणिमधिजिगमिषतीति सोऽपि सिद्धान्त निवृत्तिनिष्ठ । समीचीनमेव सामरस्यमत्रापीति ॥ भाष्यकृता सर्वेषामेतत् अभिजन्मरहस्यम्—

भर्तृप्रपञ्चप्रभृतिजरन्मायाविदा मतम् ।
निवृत्तिनिष्ठमित्यत्र न केऽपि च विशेरते ॥
साख्यसौगतभाट्टाना सकराच्छकरोदय ।
गुर्वक्षपात्पाञ्चरात्रसग्रहाल्लक्ष्मणोदय ॥
औलूक्यसाख्यभाट्टेभ्य पूर्णप्रज्ञप्रदर्शनम् ।
शार्करस्यैव शैल्यन्या शुद्धाद्वैतमतास्थिति ॥
निम्बार्कमतमित्येतत् द्वैताद्वैतसमुच्चय ।
इत्येव बहुधा जात जायते वा पुनश्च यत् ॥
न जानीमो विचित्रत्वात्पुमभिप्रायपद्धते ॥

एवमेवार्वाचीनाना ग्रन्थकर्तॄणा प्रज्ञाकरभूषणादीना धीसन्तानप्रणाश-नित्यसुखतिरोधानानिरोधनादिलक्षणा मोक्षपदार्था अपि निवृत्तिशब्दप्रवृत्तिनिमित्तधर्मावच्छिन्ना एवेति सकोचेनासकोचेन वा निवृत्तिरेव मुक्तिरिति फलतोऽप्यैकरस्यम् ॥

[1] तन्त्रवार्तिके-शिष्टाचारविचारे

धर्मशक्तिव्यञ्जकत्व बुद्धिवृत्त्यनुरोधनम् ।
अभिन्नरूपोद्देश्यत्व रत्नत्रयसमुच्चय ॥ इति ॥

(१०) ख्यातिवाद ,

अथापर प्रसङ्गाद्दार्शनिकाना एकोद्देश्यत्वमवान्तररहस्य विस्तरभयात् साधकबाधकयुक्तिविधुर स्थालीपुलाकन्यायेन निदर्शयाम — ख्यातिर्नाम ज्ञानम् । तच्च सर्वं वस्तु साधयति स्वय च सिध्यतीति स्वप्रकाशवादिन । परत एव ख्यात्यन्तरत इत्यस्वयप्रकाशवादिन इति सामान्यतो विभाग स्पष्ट एव । तत्र दृग्दृश्ययो तादात्म्यातिरिक्तसबन्धानुपपत्ते सहोपलम्भनियमात् वाह्याकाराभ्युपगमेऽप्यान्तराकारस्याभ्युपगन्तव्यतयाऽऽकारद्वयानुपलम्भाच्च निरालम्बनवाद योगाचारा प्रथम प्रकटीचक्रु । तदय सग्रह —

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनै ।
ग्राह्यग्राहकसवित्तिभेदवानिव लक्ष्यते ॥

इति । सर्वे प्रत्यया निरालम्बना प्रत्ययत्वात् भ्रमप्रत्ययस्वाप्नप्रत्ययवत् इति तत्रानुमान च सूचयन्ति ॥

तमेत निरालम्बनवाद निराचिकीर्षव कौमारिलादय ज्ञानस्य ज्ञेयेन सहोपलम्भनियमाभ्युपगमे हि निराम्बनवादस्यावकाश , स एवादावपलपनीय इति स्वानुभवमप्यपरिमृशन्त अश्रुतदृष्टचरा काचन प्रकटता विषयधर्मतया विषयवदैन्द्रियकतया च स्वीकृत्य ज्ञानस्यातीन्द्रियता तादृशप्राकट्यालिङ्गकानुमानसिद्धता च व्यवस्थापयामासु । भ्रमस्थले विपरीतख्यातिवाद स्वाप्नस्य स्मृतिता चाध्यवससु ॥

नैयायिका पुनरिममन्तरङ्ग जानन्त किमियान् सत्रास इति कौमारिलानाक्षिपन्त' क्षणान्तरव्यवधानेनानुव्यवसायवेद्यताभ्युपगमेन स-

ह्योपलम्भनियममसिद्धयन्त अन्यथाख्यातिं स्थापयन्त असत ख्यातिं निवारयन्त सौगतान् विजितवन्त ॥

प्राभाकरास्तु—भ्रमप्रमाविभागमेवावधीर्य भ्रमस्थले चाख्यातिपक्षमवलम्बमाना भ्रममेवापलपन्त धिय स्वय प्रकाशता कामयमाना अपि निरालम्बन वाद प्रत्याचचक्षिरे ॥

शाङ्करास्तु—भ्रमप्रमाविभागमङ्गीकुर्वाणा अपि, बुद्धे स्वय प्रकाशतामातिष्ठमाना अपि कुहचिदपि कदाचिदप्यदृष्टचर अनिर्वचनीय किंचिद्रजनादिक परिकल्प्य भ्रमस्य विषय समर्प्यानीर्वचनीयख्यातिवादिनो बभूवु ॥

रामानुजीयास्तु—ज्ञानस्य स्वसवेद्यता ज्ञानान्तरवेद्यतामप्यभ्युपगच्छतोऽपि भ्रमस्थले क्वचिदन्यथाख्यातिपक्ष क्वचिदख्यातिपक्ष क्वचित्साधारणधर्मग्रहलक्षण यथार्थख्यातिपक्ष च अभिदधाना सर्वस्यापि ज्ञानस्य सद्विषयत्वमेवोपापीपदन् ॥

पूर्णप्रज्ञदर्शननिष्ठास्तु अभिनवान्यथाख्यातिपक्षमाश्रित्य भ्रमोपपत्तिमिच्छन्ति । तत्राभिनवत्व नाम प्रकारांशे असतोऽपि विषयत्वम् । प्रकारप्रकारिसंसर्गलक्षणेषु त्रिष्वप्यशेष्वसत्त्व हि निरालम्बनत्वम् । पुरातनान्यथाख्यातिवादेऽपि संसर्गांशासत्त्वमपरिहार्यमिति प्रतिब्रुवन्ति ॥

साख्यशास्त्रप्रवक्तारस्तु—केचिदख्यातिपक्ष, केचिच्च सदसत्ख्यातिपक्ष च स्वीचक्रुरिति विज्ञायते । सदसत्ख्यातिर्नाम ज्ञनस्यैकस्यैव विषयाशभेदेन उभयविधता । तत्र बाह्यांशे सत्त्व आन्तरांशे ह्यात्मसंबन्धलक्षणे त्वसत्त्वमिति विभाग ॥

एव सर्वेऽपि निरालम्बनवादनिराकरणसरभेण भ्रमोपपत्तिं यथायथ कृतवन्त इति तत्त्वम् ।

अत्राय सग्रह —

अख्यतिस्त्वन्यथाख्या विषयरहितधीस्सानधिष्ठानबुद्धि
बाह्यार्थाकारयोग सदसदितरधीश्शून्यधीरात्मधीश्च ।
भ्रान्तौ सर्वत्र तत्तत्परमतकथकैराद्दता पक्षभेदा
प्रायो दृष्टिर्यथार्था नयविदभिमता क्वापि भेदाग्रहादि ॥

इति ॥

एव स्मृतिविषये प्रमाणविषये तत्प्रामाण्यविषये प्रमेयविषये तदवान्तरविषये कार्यकारणभावविषये च दार्शनिकाना रहस्य सुगृहीतमपि, अनेन च रहस्यविज्ञानेन लोकपर्यायवृत्तान्तविज्ञान सिषाधयिषितमपि, आस्तामप्रस्तुता चिन्ता प्राची प्रस्तूयते कथा ॥

## (२१) निगमनम्

एतावत्सु दर्शनेषु तदनुयायिषु च प्रबन्धेषु भगवन्त बुद्ध भगवन्त वासुदेव च विहाय न कोऽपि दर्शनकर्ता तत्प्रवक्ता वा स्वात्मान सर्वज्ञ साक्षात्कृतसर्वतत्त्व अणिमादिभि सिद्धिभि सिद्ध वेति स्वमहिमान प्रकटयतीति जानीम ॥

शिष्या पुन प्रातिम्व पूर्वं पूर्वं पुरुष श्रद्धया भक्त्या च सर्वज्ञत्वेन पूजयन्ति । लोकोत्तर च चरित्र अत्यद्भुत शक्तिविशेष सर्वज्ञत्वे निदर्शयन्ति । नैतावता तेऽपराध्यन्तीत्यस्माकमभिप्राय । यत —

यस्य देवे पारा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मन ॥

इत्यादिक शास्त्रमेव तान् तथा प्रवर्तयति ॥

तथा प्रवृत्ताश्च ते महान्त स्वस्वाभ्युपगतप्रस्थानस्थापनसरम्भप्रसूतयैव स्पर्धया नहिनिन्दान्यायेन मिथो विपर्ययदृष्टि तद्धेतुतयाऽधर्म-

इन्द्रियदोष दुस्तर्काभ्यास दुर्व्याप्त्यनुसधान विप्रलभकवाक्यश्रवणादीनि समारोपयन्त सामान्यदृष्टिविमुखा विशेषदृष्टिसुमुखा प्रबन्धान् प्रणयन्ति। सोऽय महियानेव प्रयत्न । इतरथा महीयासो भूयांसो महतामभिप्राया उत्पद्यमाना विलीयमानाश्च भवेयु । महतीय किल विनष्टि प्रपञ्चस्येति ॥

इद तु तत्त्वम्—यथा स्थूल बाह्य भौतिक वस्तु सर्वं प्राय यथा अभिमतसस्काराधानभाजनीभवितुमर्हति तथैवाभौतिकमपि सूक्ष्म चेतनाचेतनात्मक वस्तु बाल्यात्प्रभृति तादृशतादृशसस्कारविशेषाधान-भाजनीभवनस्वभावतया देशकालदशाभेदविभिन्नसस्कारवद्भवितुमर्हती-त्युपलम्भ सर्वेषामपि जगति तस्थुषाम् । तत एव च तत्रतत्र सि-द्धान्ते परिश्रमशालिना श्रद्धामयाना पुरुषाणा तथैव स्वात्मसाक्षि-कोऽनुभवोऽपि ॥

तादृशमनुभवस्वभावमपरिचेतयमानास्त्वितरे त त सिद्धान्त ना-नुसरन्तीति किमत्र चित्रम् । अचेतयमाना अपि हि पश्वादय स्वस्वा-भ्युपगमस्वस्वप्रवृत्तिप्रतिहन्तार नानुसरन्ति, किमुत चेतयमानाः ॥

नन्वेवमियताऽपि महता प्रबन्धेन स्वस्वानुभवसाक्षिकाणा पर-स्परविरुद्धाना राद्धान्ताना समरसभावो निस्स्वभाव एव स्यादिति चेन्न—भावाभावस्वभावापरिज्ञानात् । तथाहि—यथा सकोचनिवृत्तिरेव विकास आवरणनिवृत्तिरेव प्रकाश औपाधिकधर्मनिवृत्तिरेव स्वा-भाविकधर्माविर्भाव प्रवृत्त्यभाव एव निवृत्ति कस्याचित् उदेतैव हि सविता कस्यचिदस्तमेता, तथा सर्वशून्यवाद एव सर्वभाववाद सर्वतो मुक्तिवाद एव सर्वत प्राप्तिवाद । नैरात्म्यवाद एव सार्वा-त्म्यवाद सर्वपरित्याग एव सर्वसग्रह । तथाच तत्रतत्र सिद्धान्ते सार्वात्म्य सार्वज्ञ्य स्वाराट्त्व साम्यपारम्य स्वस्वभावापत्ति. अविद्या-निवृत्ति उपाधिनिवृत्ति॰ इत्यादिभिश्शब्दैस्सामान्यतो विशेषत प्रति-

योगितो देशत कालतो वस्तुतश्च विवक्षाभेदनिबन्धनोपदेशे निवृत्ति-लक्षण सुखमेवानुबुभूषन्तीत्यलमेतावतेति ॥

एव प्रवहति जगति महति निरूपितयाऽनया सुसूक्ष्मया दृष्ट्या विचार्य सर्वानर्थकन्दभूत राग क्रमेण परिपच्य समरसभावसुखानुभवेन सर्वभूतसौहार्देन च परस्पर भावयन्त अत्र परत्र च सर्वेऽपि सर्वविध-सौभाग्यवन्तो भवितुमर्हन्ति ॥

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ॥

---

मन्दस्यापि प्रवृत्ति किमपि फलमनुद्दिश्य कस्यापि न स्यात्
नानासिद्धान्तनीतिश्रमविमलधिया किंपुनर्न्यायसिद्धम् ।
यस्मिन् सर्वैर्मुनीन्द्रै शुचितममतिभि विद्वदग्र्यैश्च पूर्वै
नीत सर्व वयस्तत्कथमिह वितथीकर्तुमेक कृती स्यात् ॥

केचित्सकेतभीत्या कतिचन कृतिन पूज्यताभङ्गभीत्या
ख्यात्याशापाशतोऽन्ये विततजडतया सत्पथेऽपि स्खलन्ति ।
तत्त्व गुप्त गुहाया गुरुवरचरणाम्भोजकिञ्जल्कयोगात्
सिद्धात्सिद्धञ्जनात्तद्विशदयितुमसावुद्यमोऽस्माकमेष ॥

व्यातानीत्सर्वसिद्धान्तमीमासा शुभलोचन ।
लक्ष्मीपुर श्रीनिवासाचार्य प्रेक्षावता कृते ॥

जीयाद्दर्शनमीमासा लोकशास्त्रानुरञ्जनी ।
सर्वतत्त्वविशुद्ध्यर्था प्रतिष्ठा यत्र शाश्वती ॥

॥ शुभमस्तु ॥

श्रीमन्महाराजसंस्कृतमहापाठशालासंबन्धि वृत्तान्त

## वेदः

जगति हि जानिमतां प्राणिमात्राणां सुखप्रेप्सा दुःखपरिजिहीर्षा च नैसर्गिकी इति सर्वजनीनम्। यद्यपीदं पश्वादीनामपि अविशिष्टं, प्रकृतशास्त्रविचारस्य मनुष्याधिकारिकत्वेन तानेवाधिकृत्य प्रकृतमिदमारभ्यते—

"इष्टं मे स्यादनिष्टं मे मा भूत्" इति समीहाविषयस्य वस्तुनः प्राप्तेः परिजिहीर्षाविषयस्य च परित्यागस्य धर्माधर्मानुष्ठानाननुष्ठानसाध्यतया प्रथमतो धर्माधर्मज्ञानं अवश्यसंपादनीयमिति तत्प्रमाणादिकं सम्यङ्निरूपणीयम् ॥

तच्च श्रुतिस्मृतीतिहासारूपमनेकविधम्। तेषां च सर्वप्रमाणललामभूता श्रुतिरेवानितरसापेक्षं प्रमाणमिति तन्निरूपणायायं यत्नः। तत्र—

एक एव द्विजा वेदो वेदार्थश्चैक एव तु।
तथापि मुनिशार्दूलाश्शाखाभेदेन भेदिताः ॥

इत्यादिभिस्सूतसंहितादिपुराणवचनैः एकार्थप्रतिपादकस्यैव वेदस्य शाखाभेदेन नानाप्रकारता स्पष्टमवगम्यते ॥

ऋग्वेदस्य गुरुपरंपरया शाखाप्रवर्तकानां भेदेन एकविंशतिशाखाभिन्नत्वं प्रमीयते। यजुर्वेदस्तु—शुक्लकृष्णभेदेन द्विविधः। एवं द्वैविध्ये निदानत्वेनाधुनातनैः प्रतिपाद्यमाना काश्चित्कथा निराधारा



सर् के. शेषाद्रि अय्यर्, बि.एल्., के.सि.एस्.ऐ.

face page 220.

केवलमवान्तरवैषम्यमूलकप्रद्वेषमात्रप्रयोजना अविवेकिमात्ररमणीया प्रकृतानुपयोगिन्यश्च । शुक्लयजुर्वेदे पञ्चदशप्रभेदाश्शाखा ग्रन्थमूलत उपलभ्यन्ते । कृष्णयजुर्वेदेऽपि काश्चिच्छाखा उपलभ्यन्ते ॥

सामवेदे तु सहस्रधा भिन्नाश्शाखा बहवो गीतिप्रभेदा लक्ष्यन्ते । काश्चिदेव प्रचारगोचरता गता समुपलभ्यन्ते ॥

सर्वेऽप्यमी ऋग्वेदयजुर्वेदसामवेदा सकलेष्वपि यज्ञेषु प्रायशो विनियुज्यन्ते । अतः प्राधान्येन परिगणनादेषा समुदायस्त्रयीत्येता समाख्या लभते । श्रुतौ चानेकत्र त्रयाणामेव वेदानामनुकीर्तन दृश्यते ॥

आथर्वणस्तु वेद यद्यपि चतुर्ष्वपि वेदेष्वन्यतम एव भवति । अथापि शान्तिकपौष्टिकादिक्रियाणा मारणोच्चाटनस्तम्भनमोहनाभिचारिकादिक्रियाणामाग्नेयवायव्याद्यस्त्रप्रयोगौपयिकमन्त्रविशेषाणा च विनियोगनिरूपकब्राह्मणभागसहित विविधप्रकरणविशेषसवलितो दृश्यते । अत्र च शौनकीय दामोद तोतायनीय जाबालीयमुख्या नव शाखा उपलभ्यन्ते । एतद्वेदसम्बन्धिप्रयोगस्य प्रचारवैरल्यकारण तु सत्कार्यविरोधिना जनाना निग्रहाय सद्धर्मप्रतिष्ठापनाय च विनियोक्तव्या यथायथ मन्त्रा इदानीं पापभूयिष्ठे काले तत्तज्जनाना मन परिपाकानुसारेणासत्कार्यसाधने पापकृत्यप्रवृत्तौ च भूयोभूयः प्राचुर्येण विनियुज्येरन्नमी मन्त्रा इति दीर्घदर्शिभि प्राचीनैर्महानुभावैर्विदिततया तस्य वेदस्य प्रचार प्रायशो लुप्तप्राय आसीदिति श्रूयते ॥

वस्तुतस्तु—अथर्ववेदविचार न्यायमञ्जर्यां जयन्तेन निरूपित । तत्राथर्ववेदस्य प्रामाण्याक्षेप त्रयीबाह्यत्व प्रामाण्यसमर्थन त्रय्यात्मकत्व प्राथम्य ब्रह्मवेदत्व यज्ञोपयोगित्व अध्यायिना श्रेष्ठत्व [1]

[1] 254 पु

इत्यादयो विषया प्रतिपादिता । तन्त्रवार्तिककृन्मतमप्येव दूषितम्—तदेवमवसिते यद्वार्तिककारेण भयादिव द्वेषादिव मोहादिव सानुकम्पमिव वा इदमुच्यते ' यदि यज्ञोपयोगित्वम् "[1] इत्यादि तदहृदयगमामीत ॥

सर्वेष्वपि वेदेषु पूर्वो भाग कर्मकाण्ड उत्तरो भागो ज्ञानकाण्ड इति च द्वैविध्येन विभाजितोऽस्ति । पूर्वभागे तत्तद्वर्णाश्रमसम्बन्धिन सामान्यधर्मा विशेषधर्माश्चाभिधीयन्ते । ज्ञानकाण्डे च मोक्षोपयुक्त। केचिदुपासनाविशेषा ज्ञानसम्पादनोपाया ज्ञानस्वरूप च सम्यक्प्रतिपाद्यन्ते ॥

अत्र कश्चिद्विशेष —अधिकारिणामधीतस्वाध्यायानामपि अपरिशीलिततदर्थविशेषाणा न कोपि पुरुषार्थ सेत्स्यतीति तदर्थावबोध एव फलमुपजनयतीति केचिदाहु ॥

अन्ये तु शब्दप्रधानस्य वेदस्य तदध्ययनमेव परम प्रयोजन प्रयोजयति तदर्थावबोधे पर विशिष्ट फलमुदेतीत्याहु । अयमेव पक्ष प्राचीनैराभियुक्तैरङ्गीकृत ॥

अथ भाष्यपठनस्यापि प्रयोजनादिक किंचिदुपवर्णयाम —सम्पूर्णस्य वेदार्थस्यावगमेन परम प्रयोजनमस्ति । तत्कृते प्राचीनैर्विरचिताना भूयसा भाष्याणा सत्त्वेपि आद्यात्विके माधवाचार्यकृत सर्वत प्रचुरतर दृश्यते । तत्र तत्तदनुवाकाध्यायानन्तर तत्प्रयोगप्रकार. तत्तत्पदनिष्पत्त्युपयोगीनि व्याकरणादिसूत्राणि च सगृहीतानि । तदुपयोगिमीमासाविषया पूर्वपक्षसिद्धान्तार्थाश्च सप्रयोजन विशदीकृता., यै प्रयोगकाल उद्भवता बहुविधाना सशयाना निराकरणपूर्वक परमसिद्धान्तोऽर्थ हृदयगम सकलदेशस्थितैरपि आस्तिकशिष्टजनै परिगृह्येत । अन्यत्तु भट्टभास्करमिश्रविरचित याजुर्वेदिक भाष्य नातिचिरादेवास्मि-

[1] 107 पु

न्नेव नगरे प्राच्यकोशागारे तदध्यक्षैर्मुद्रित प्रकाशता नीत च । पर तु माधवीय इव नात्र कल्पसूत्रविमर्शे भूयान् विस्तरो दरीदृश्यते । अनयो भाष्ययो पौर्वापर्ये बहवो विप्रतिपद्यन्ते ॥

यजुर्वेदे तु कियतश्चित्कालात्प्राक् सारस्वतप्रवर्तिते पाठे यथायथमधीयमानेऽपि अध्यायकाण्डोपक्रमोत्सर्जनादि यथाकाण्डमेव निर्वर्तनीयमित्यय विशेष ॥

किञ्च इतरासु शाखासु यथा मन्त्रकाण्ड ब्राह्मणकाण्ड इत्यसकरेण काण्डो विभक्तो नैव तैत्तिरीयसहिता इति व्यवह्नियमाणमन्त्रभागे तथैव ब्राह्मणत्वेन व्यवह्नियमाणग्रन्थे मन्त्रब्राह्मणयोरसकीर्णतया विभाग परिष्कृत । इतरत्र तु सहिता मन्त्र भाग एव, ब्राह्मण तु ब्राह्मणमेव, न तावत्परम्परसमावेश । अन्यच्च—तैत्तिरीयव्यतिरिक्तशाखासु ब्राह्मणग्रन्थस्य न मन्त्रभागवत् चातुस्स्वर्य, किंतु भाषिकस्वर एव । तैत्तिरीये तु मन्त्रभागस्येव ब्राह्मणभागस्यापि चातुस्स्वर्यमविशिष्टमेव ॥

किंच—पूर्वोक्तभाष्ययो —यत्रार्थभेद दृश्यते यथा— यया वात स्वस्त्या स्वस्तिमान् तया स्वस्त्या स्वतिमान् असानि ' । इतिभास्कर । "यया वात स्वस्त्या स्वस्ति मा तया स्वस्त्या स्वस्ति मानसानि" इति माधव , तत्र तद्वाक्यस्थस्वरानुकूले समुचिते मन्त्रार्थे स्वीकर्तव्ये तद्विरुद्धो द्वितीयोऽर्थ कथ परिग्राह्यता गच्छेत् इति विमृशन्तु विद्वास । एव बहूनि सन्ति निदर्शनानि ॥

साङ्गानामेतेषा वेदानामध्ययनमध्यापन च कर्णाटकदेशेषु प्रतिग्राम राजराज्यश्रेय प्रार्थनापुरस्सर ब्राह्मणैर्निरीतिबाधैर्निश्चिन्तैश्च कृतमासीदिति बाढ शिलाशासनेभ्योऽवगम्यते । अत्र च यदुवशपय पारावारपूर्णचन्द्राणा चामराजादिनरेन्द्राणा नैसर्गिकी वेदशास्त्रादिविद्याभ्युदय-

चकीर्षैव निदानम् । ते हि विद्यैव राजराज्योभययोगक्षेमसम्पत्करीति दृढमज्ञासिषु ॥

अत एव वेदवेदाङ्गाध्ययनाध्यापनसौकर्याय यदुवशमुक्तामणिभिर्भूपतिभिर्ग्रामाग्रहारभूवृत्तिदानान्यध्यापकेभ्यो बहुधाऽकारिषत चामराजमहाराजेन षष्ठेन मण्ड्यप्रान्ते होन्नलगेरेग्राम, कण्ठीरवनरसराजमहाराजेन श्रीरङ्गपट्टणप्रान्ते सुकदेरु—कट्टेकेरे—हन्देहळ्ळि—बीरहळ्ळि—कल्लिगुण्डि—मलनायकनहळ्ळि—मारनायकनहळ्ळि—ग्रामा, चन्नपट्टणप्रान्ते बलकुळिग्राम, अर्कल्गूडुप्रान्ते मत्तिकोडुग्राम, दोड्डदेवराजमहाराजेन कुणिगल्प्रान्ते हालुगेरेग्रामे पञ्चाशद्वृत्तय तूबिनकेरे ग्रामश्च, मैसूर्प्रान्ते मन्त्रमूर्तिराजेन्द्रभारतीस्वामिभ्य चन्दकवाडि केतगौडनहळ्ळि देवपुर चामपुर गुज्जनपुर शिवपुर ग्रामा, तिरुमकूडूलु नरसीपुरप्रान्ते हळ्ळिकेरे तेण्डेकेरे ग्रामौ, कृष्णराजपेटेप्रान्ते देवराजपुरापराभिधान माळगूरुग्राम, मण्ड्यप्रान्ते सोपग्रामो हालुगङ्गनकेरेग्राम, गुण्डलुपेटेप्रान्ते लक्कूर्ग्राम यडतोरे प्रान्ते मेर्यग्राममुण्डूरुग्रामौ, हुणसूरप्रान्ते बिळिकेरे ग्रामे षड्विंशत्यधिकशत वृत्तय हेग्गडदेवनकोटेग्रामे बिळिगुम्बग्राम, चिक्कदेवराजमहाराजेन मैसूर्प्रान्ते देवम्पराग्रहार, चामराजनगरप्रान्ते किब्बालिङ्गनपुरकृष्णापुर बोम्मनहळ्ळिग्रामा, नञ्जनगूडुप्रान्ते एचनहळ्ळिग्राम, दोड्डकृष्णराजमहाराजेन नञ्जनगूडुप्रान्ते कृष्णराजसमुद्राग्रहार, नञ्जनगूडुग्राम, द्वितीयेन श्रीकृष्णराजेन्द्रेण गिड्डहळ्ळिग्राम, रामचन्द्रपुराग्रहार, यडतोरेप्रान्ते कृष्णराजसागरग्राम, देवाम्बासमुद्राग्रहार, नेलवङ्गलप्रान्ते अप्पुगौण्डनहळ्ळिग्राम, कुणिगल्प्रान्ते सोण्डेकोप्पलुग्राम, तृतीयेन श्रीकृष्णराजमहाराजेन चन्नपट्टणप्रान्ते होसहळ्ळि मङ्गापट्टण गोल्लहळ्ळि चामनहळ्ळिग्रामा कोप्पप्रान्ते पाळ्यदमकि-

ग्राम , मैसूरूपत्तने रमाविलास लक्ष्मीविलास कृष्णविलासाद्यग्रहारा यडतोरे बूबिनकेरे कृष्णराजपेटे प्रान्तेषु बह्वो ग्रामाश्च वेदविद्भ्यो विप्रेभ्य जीविकार्थमध्ययनाध्यापनसौकर्यार्थं प्रदत्ता इति शिलाशासन-ताम्रशासनमुखादवगम्यते ॥

श्रीमति चामराजमहेन्द्रे च कर्णाटदेश शासति वेदशास्त्रा-णामधीतिबोधाचरणप्रचारणाय सरस्वतीप्रासादनाम्नी सस्कृतपाठशाला स्थापिता समभवत् । इदानीं च श्रीकृष्णराजमहाराज कृपावशात् पाठ-शालायै पूर्वतोऽप्यभ्यधिकधनसाहाय्य कृत्वा उपाध्याया विद्यार्थिनश्च तोषिता प्रोत्साहिताश्चेत्येतत्सर्वेषामपि विदितमेव । तेषु चोपाध्यायेषु द्विवेदिसुब्रह्मण्यावधानि घनपाठिसुब्बावधानि नरसिंहावधानि शिङ्गाचार्य महादेवावधानि सामपाठकपुट्टश्रौति मगुश्रौति प्रभृतयोऽनेकेऽध्यापका प्रार्थिता अभूवन् ॥

वेदा यैरभिरक्षिता बहुशतैर्ग्रामप्रदानैर्मुदा
विद्याश्चानिशमेव भूरिरचितैस्साहायकै वर्धिता ।
तान्कर्णाटमहीभृतस्तुलयितु केऽन्ये जगत्या नृपा
नित्य तेषु कृतज्ञता ननु बुधैर्धार्या सदा नन्दितै ॥



## धर्मशास्त्रम्.

परलोकभयात् केचित् राजदण्डभयात्परे ।
परस्परभयाच्चान्ये नरा पाप न कुर्वते ॥
धर्मशास्त्रार्थकुशला कुलीनास्सत्यवादिन ।
समाश्शत्रौ च मित्रे च नृपतेस्स्युस्सभासद ॥
श्रुत्यध्ययनसम्पन्ना धर्मज्ञास्सत्यवादिन ।
राज्ञा सभासद कार्या रिपौ मित्रे च ये समा ॥

सुविदितमेवेद सर्वेषा यद्धर्मशास्त्रमनुसृत्य विहितपराङ्मुखान्प्रतिषिद्धोन्मुखाश्च जनान्दण्डयितुमर्हान्सभासदो विना न राज्य क्षणमपि सुखेनैधते इति । अत एव

अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरक चाधिगच्छति ॥

इति स्मर्यते । पुरा हि दुष्टनिग्रहाय राजदण्ड प्रायश्चित्त चेति द्वौ निग्रहोपायावभवताम् ।

प्राणापनोदन सुरापान स्तेय परदारगमनादीन्यागासि धर्मशास्त्रानुरोधेन राज्ञस्सभासदैर्दण्डेन प्रायश्चित्तेन वा शिक्षितान्यभवन् । दुष्टनिग्रह विना न शिष्टा रक्ष्यन्ते इति प्रजापालनाय धर्मशास्त्रमावश्यकमासीत् । धर्मशास्त्रज्ञा एव सर्वत्र राज्ञा न्यायस्थानेषु नियुक्ता दुष्टानदण्डयन्निति ज्ञायते । दायविभागर्णादान सीमाविवाद कूटसाक्ष्यादीन्विवादाश्चाहन्यहनि सञ्जायमानास्त एव पर्यहार्षुरिति च विदितमेव ।

कचिद्राजैव सभासद्भि परिवृत प्रजाना परस्परविवादान्निराकार्षीदिति बाढमवगम्यते । वर्णाश्रमाचारोचिताद्धर्मात्प्रच्यवतो जनान्ते ते वर्णा बहिरकार्षुराप्रायश्चित्तानुष्ठानादिति चावगम्यते ॥

धर्मश्च द्विविध —दृष्टोऽदृष्ट इति । अदृष्टधर्मो वेदबोधित 'चोदनालक्षणोऽर्थो धर्म ' इति जैमिनिना भगवता मीमासासूत्रे निर्णीत । 'यत्त्वार्या क्रियमाण प्रशसन्ति म धर्म ' इति च धर्मलक्षण वर्णित आपस्तम्बादिभिरिति दृश्यते । पटघटादीनि वस्तूनि यथा चक्षुषा साक्षात्कर्तुमर्हाणि न तथा धर्मस्साक्षात्कर्तु शक्यते । धर्मस्वरूपनिर्णये विद्वासोऽपि विवदन्ति । देशभेदेन जनभेदेन कालभेदेन च धर्मो भिद्यमानो दृश्यते । स च धर्म धर्मशास्त्रेषु निरूपित । धर्मशास्त्र स्मृतिश्चेत्यनर्थान्तरम् । अत एव 'श्रुतिस्तु वेदो विख्यातो धर्मशास्त्र तु वै स्मृति ' इत्युक्तमभिमुक्तै ॥

अत्रि मनु याज्ञवल्क्य पराशर प्रभृतयष्षट्त्रिंशदृषय मूलस्मृतिप्रवर्तका श्रूयन्ते । तेष्वपि मनु याज्ञवल्क्य पराशरस्मृतय अवश्यापेक्षितानेकार्थप्रतिपादकत्वात् आप्ततमत्वेन सर्वपरिगृहीतपुरुषै कृतत्वाच्च सर्वस्मृतिषु प्राधान्य लभन्ते । एतासा व्याख्यातार बहवो वर्तन्ते । तेषु मेधातिथिप्रभृतिषु कुल्लूकभट्टेन कृत मनुस्मृतिव्याख्यान विज्ञानेश्वरविरचित याज्ञवल्क्यस्मृतिव्याख्यान माधवाचार्यकृता पराशरस्मृतिविवृतिश्च प्रधानमिति सर्वैरभ्युपगतम् ॥

भरतखण्डे तु आङ्गलसाम्राज्ये स्थापिते सति आर्याणामष्टादशविवादपदगोचरा स्मृतिविशेषा आङ्गलभाषाया परिवर्तितास्तैरेव विवादनिर्णयास्थानेषु न्यायस्थानेषु धर्मा निर्णीयमानास्समभवन् । तत परमष्टादशविधविवादनिर्णयाय न पण्डिताना नियोगोऽकारि । तदिदानीं धर्मशास्त्रज्ञा वर्णाश्रमाचारनिर्णयायैव केवलमाद्रियन्ते ॥

स चायं वर्णाश्रमधर्मविचारः नाल्पीयान्वर्तते । तिथिनिर्णय शुभाशुभकर्मकरणक्रम देवतोत्सवक्रम जपहोमादिकरणक्रम षोडश-संस्कारानुष्ठानकालक्रमादिनिर्णयश्चेति बहवो विषया धर्मशास्त्रज्ञैर्विद्वद्भि-रनवरतं निर्णेया जाग्रति । अत एव राजास्थाने त्रयश्चत्वारो वा विद्वांसो धर्माधिकारिणो नियुक्ता दृश्यन्ते ॥

श्रीमन्महीशूरमहास्थान्यामपि श्रीमति तृतीये कृष्णराजमहाराजे कर्णाटदेशमवति सति महान्तो विद्वांसश्चत्वारः धर्माधिकारिपदव्यं-नियुक्ता धर्माधर्मनिर्णयान् कुर्वन्त आसन् । ततश्श्रीमति चामभूमिपाले शासति महीं तस्यामेव धर्माधिकारिपरंपरायां कुण्टिनरसिंहशास्त्रिण काशीशेषरामशास्त्रिण कुंभकोणशेषाचार्यां चक्रवर्त्य्यगार्याश्च बहून् वत्सरानस्या पाठशालाया अध्यक्षा अपि सन्त पाठप्रवचनपरीक्षादिकं सर्वं कार्यजातं निर्वहन्त सन्ति स्म ॥

तस्मिन् समये व्याकरणधर्मशास्त्रसाहित्याद्यनेकविधशास्त्रविचा क्षणा श्रीमन्त चक्रवर्त्य्यगार्यां अस्यां पाठशालायामेव धर्मशास्त्राणि बहून् कालान् शिष्यानध्यापयामासु ॥

ततश्च ते महान्त तदानीमत्यावश्यकं विश्वजनोपयोगकरं संस्कृतग्रन्थानां परिशोधनं मुद्रापणं च प्रवचनापेक्षयाऽप्युत्तमं कृत्यं मन्वाना तर्कव्याकरण वेदान्तालंकार धर्मशास्त्राद्यन्तर्गतान् परश्शतं प्रबन्धान् लेखकप्रमादादिबहुदोषदूषितान् संशोध्य समुद्रय प्रचारया-मासु । तेन बहो कालात् प्रमुषिताः प्रबन्धाः यशसा पुनरुज्जीविता बभूवु ॥

विजयनगरमहाराजेषु कर्णाटदेशे शासत्सु विद्यारण्यभगवत्पादेषु श्रृङ्गगिरिग्रामेऽद्वैतसाम्राज्यपीठमलङ्कुर्वत्सु पराशरमाधवीयमिति पराशर-स्मृतिव्याख्यानं स्मृतिसङ्ग्रहश्चेति निबन्ध, कालनिर्णय इति तिथि-

निर्णायको ग्रन्थश्च तैरेव जनोपकाराय विरचिता इति सर्वेषा विदितमेव। तत पर रङ्गनाथशास्त्रि कुद्दिशास्त्रिप्रभृतिभि स्मृतिमीमासा आह्निकम्, दत्तरत्नापण दत्तचिन्तामणिरित्यादय बहवो ग्रन्था विरचितास्समुपलभ्यन्ते। सङ्क्रान्तिनिर्णयप्रमुखा अनेके ग्रन्था मैसूरु महाराजकुलाचार्यवर्यै श्रीब्रह्मतन्त्रपरकालमहाम्थान निर्वहणधुरधरै उभयवेदान्ताचार्यै श्रीकृष्णब्रह्मतन्त्रपरकालस्वामिभि प्रणीता दृश्यन्ते॥

तर्कतीर्थेन पण्डितरत्नेन कस्तूरिरङ्गाचार्येण धर्माधिकारिपदमलकुर्वाणेन सर्वतन्त्रकुशलेन सुगृहीतनामधेयेन नव्योपाकर्मनिर्णयव्याख्यान सत्तरणतराणिप्रमुखा धर्मशास्त्रग्रन्थाश्चामराजेन्द्रे कर्णाटसिंहासनमधिरुह्य कर्णाटमण्डल शासति विरचिता प्रदृश्यन्ते॥

श्रीमति तुरीये कृष्णराजमहाराजे शासति महीमिदानीं तेनैवप्रभुवरेण सदय रक्षिताया सरस्वतीप्रासादपाठशालायामस्या धर्मशास्त्रप्रचारणाय धर्मशास्त्रज्ञा अधिकृतास्शास्त्रमेतद्विद्यार्थिभ्यो व्याचक्षते। तदित्थ धर्मशास्त्रायत्त राज्यरक्षण राजायत्त धर्मशास्त्रप्रचारणमिति राजधर्मशास्त्रयो परस्परमुपकार्योपकारकभाव कर्णाटदेशेष्विव नान्यदेशेषु चकास्ति॥

जेजीयता महाराज कृष्णराजो महीतले।
वर्धयन् सास्कृतीं विद्या पालयन्धर्मत प्रजा॥



# व्याकरणशास्त्रम्.

अथ तावद्व्याकरण वेदाङ्गेषु प्रधानमङ्गमिति सर्वेषामपि विदितम् । व्याकरण नामार्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययादिविशेषान्विदधत् पद खण्डार्थ विश्लेषज्ञापक सस्कारविशेषेण आसमान्तात् वैदिकान् लौकिकाश्च शब्दान् करोत्युत्पादयदि प्रकाशयति वा य नन्दराजराज्यकालिकपाणिन्यादिमहर्षिप्रणीत स ग्रन्थराशि तद्व्याख्यास्साटिप्पणिकास्तन्मतसिद्धान्तप्रकाशकमञ्जूषादिरपि । तच्च नवविधम्—

ऐन्द्र चान्द्र काशकृत्स्न कौमार शाकटायनम् ।
सारस्वत चापिशल शाकल पाणिनीयकम् ॥ इति ॥

तदित्थ बहुषु व्याकरणेषु जाग्रत्सु किमिति पाणिनीयमेव व्याकरण वेदाङ्गत्वेन स्वीकृतमिति प्रश्नस्समुदेति । न हीच्छैवात्र नियामिका । एकस्यैव शब्दस्य व्याकरणभेदेन साधुत्वासाधुत्वापत्तिश्च स्यात् । अस्योत्तर—सर्वेषा वैदिकाना लौकिकाना च साधूना शब्दाना प्रकृतिप्रत्ययादिविभागकल्पनया व्युत्पादन स्वरविचारादिक च पाणिनीयादन्यत्र न कृतमिति । तस्मादेव वेदाङ्गमिति महार्षिभिस्स्वीकृतम् ॥

अत्रेद बोध्यम्—अतिक्रान्तबाल्य आहिकश्शालातुरीय इत्यादिनामा नन्दराजराज्यकालिक पाणिनिर्विद्याग्रहणयोग्य वय प्राप्य नन्दराज्ये निवसन्तमुपवर्षनामान अथवा वर्षनामान पण्डितवरिष्ठ विद्यासपत्तिलाभायोपजगाम । तत्रास्य सब्रह्मचारणौ वररुचिव्याडिनामानावप्यास्ताम् । स पाणिनिर्जडबुद्धिश्शुश्रूषाक्लिष्टश्चासीत् । तमेन

पण्डितपत्नी हितोक्त्या सर्वविद्याधिपतिमीशान तपसाऽऽराद्धु हिमालय प्रेषयामास । चिरात्कठोरतरेण नियमेन युक्तस्तीव्रेण तपसा तत्र विद्याधिपतिमीशान तोषयामास । कदाचित्स ईशानो भक्तानुग्रहाय प्रदोषसमये नाट्यरङ्गस्थलमधिष्ठाय स्वहस्तगत डमरुक चतुर्दशवार वादयामास । स नाद पाणिनिना स्वेन करिष्यमाणाष्टाध्यायी धातुपाठ गणपाठ लिङ्गानुशासन मूलभूतचतुर्दशसूत्रात्मकवेदाङ्गव्याकरणसाम्राज्यप्रापकवरदानवाक्यरूपोऽमृतत्वेनापीयत ॥

ततस्सपाणिनि स्वतपोमहिमातिशयलब्ध व्याकरणमूलभूतोक्तसाधुशब्दसाम्राज्यतेजोबलेन "वृद्धिरादैच्" इत्यादिकानि "अ अ" इत्यन्तान्यष्टाध्याय्यात्मकसूत्राणि रचयामास । तथा धातुपाठमेकादशगणात्मक तत्तद्गणसूत्रेषु गणपाठान् लिङ्गानुशासनसूत्राणि षडधिकारात्मकानि शब्दोच्चारणादिव्यवस्थापिका वर्णानामुत्पत्तिप्रयत्नादिप्रकाशिका शिक्षा तथा पाताळविजयाभिध काव्यमुपजातिवृत्तक च रचयामास ॥

तत कालक्रमेण पाणिनिव्याकरणस्य वररुचिकृतवार्तिकस्य च सारासारविवेकाय भगवान् पतञ्जलि महाभाष्य विरचय्य बहून् शिष्यानध्यापयामास । इत्थ पाणिनिकृतमष्टाध्याय्यात्मक व्याकरणसूत्रजात सभाष्य सर्वत्र प्रवचनपथे प्रसृत सत् जगत्सर्व व्याकरणमयमिवातानीत् । तत कैय्यट सर्वेश्वरदीक्षित विप्रराजेन्द्रादिभि पण्डितवरैस्तस्यैव महाभाष्यस्य व्याख्यानानि प्रदीप-मणिरत्नप्रभा-स्फूर्त्यादीनि विरचितानि । नागेशमहाशयैश्च प्रदीपस्य विवरणमुद्द्योताख्य परिभाषेन्दुशेखर लघुशब्देन्दुशेखरादय प्रबन्धा व्यरच्यन्त ॥

ततस्समयमहिम्ना भरतखण्डेऽस्मिंस्तत्तद्राजकीययुद्धाद्युपसर्गवशात्पर्याकुलीभूते तत्तद्देशस्थितग्रामनगरादिषु निवसन्तस्सलक्षणघनान्तवेदपाठिनो वैदिका वैयाकरणा नैयायिका मीमासका वेदान्तिनो मान्त्रिका-

स्तान्त्रिका आगमिकाश्शिल्पिनश्च इमा महीशूरास्थानीमधिगत्य तदानीं-तनस्य श्रीमन्मुम्मडिकृष्णराजओडयर्महाराजस्याश्रयमुपलभ्य तद्बलेन शिष्यान् बहूंस्तत्तच्छास्त्रजातमध्यापयन्त सुखेनात्र न्यवसन् ॥

तेषु काञ्चीनगरसमीपस्थितमडकोळत्तूर्ग्रामाभिजन काशीशेष-शास्त्री, नरसिंहशास्त्री, होसपेट दादाशास्त्री भाष्यमप्पाशास्त्रीत्येवमनेके वैयाकरणाः श्रीमत कृष्णराजप्रभो कृपाकटाक्षातिशयबलात्तदानीमधि-वसन्तस्सुखेन काल नयन्ति स्म ॥

तत्र काशीशेषशास्त्रिणः चरितमतिरमणीयमिति कृत्वा किंचित्प्र-स्तूयते—स प्रथम काशीं तत पुण्यपत्तन ततस्सुरपुरमधिवसन् तत्र युद्धार्थं महीशूरनगरादागतेन सैन्येन तद्राजसदनस्थाना केषाचिद्बन्दी-ग्रहणसमये तद्राजसदनस्थ काशी शेषशास्त्री द्वाविंशतिवयस्कोऽय बन्दीकृतो महीशूरपुर नीत श्रीकृष्णराजवोडेयर्महाराजमातुलस्य श्रीचा-मप्पाजिमहाधिकारिण आरामे निरुद्धो रक्षितश्च ॥

अत्रान्तरे कार्यान्तराभावेनाय पण्डितवरिष्ठ महामहापण्डिताना तच्छिष्याणा च शास्त्रीयवादप्रक्रियाज्ञानाय पाठनसामयिकविवक्षितार्थ ज्ञानाय च उपयुक्तान् चतुरो–ग्रन्थान् रचयामास । ते च प्रबन्धास्त्विमे-परिभाषेन्दुशेखरव्याख्या सर्वमङ्गळा, प्रभा, वादरत्नावळी, लघुशब्दरत्न-पञ्चसन्धिव्याख्या च ॥

एतेषु चतुर्षु ग्रन्थेषु यस्मिन् दिने प्रथमा सर्वमङ्गळा समापिता तस्मिन्नेव दिवसे राजद्वारे महामन्त्रिवर्यै श्रीमद्धी रामराव् महाशयै कृतेन विचारेण नाय तद्राजसबन्धी किंतु पण्डितवरिष्ठ इति निर्णीय बन्दीग्रहाद्विमोच्य स्वगृहे शकरभगवत्पादीयभाष्यमध्यापयितु गुरुरकारि ॥

ततश्श्रीकृष्णराजवोडेयर्महाराजेन गुणैकपक्षपातिना वृत्तिगृह-

प्रदानादिसमानेन पुत्रनिर्विशेषं परिपोष्यमाणोऽहर्दिव व्याकरणशास्त्र मुनित्रयोपज्ञमध्यापयन् सुखेन वसति स्म ॥

तच्छिष्यास्त्वनेके व्याकरणशास्त्रपारङ्गता प्रख्याता पण्डिता-बभूवु । तत्पुत्राभ्यामण्णय्यशास्त्रि धर्माधिकारिरामशास्त्रिभ्यामध्यापिता बहव शिष्या इदानीमपि महीशूरनगरीमिमामलकुर्वन्ति ॥

एव श्रीमन्मुम्मडि कृष्णमहीमहेन्द्राश्रयबलेन व्याकरणनरसिंहशास्त्रिण शिष्या अत्रत्या कुप्पाशास्त्रि लक्ष्मणाचार्य चामराजनगर श्रीकण्ठशास्त्रि गरळपुरशास्त्रि प्रभृतयो महान्तो वैयाकरणास्सवृत्ता ॥

एव नानामुखेन व्याकरणशास्त्रपठनपाठनप्रक्रियाया प्रसरन्त्या सर्वेषामपि शास्त्राणामेकत्रैव स्थाने प्रवचनकल्पनमध्येतृविद्यार्थिसौकर्यापादकमिति मत्वा श्रीमन्मुम्मडि श्रीकृष्णराजेन्द्रमहाराजस्य सूनु श्रीमान् श्रीचामराजेन्द्रसार्वभौम सस्कृतमहापाठशाला निर्माप्य तत्र महत पण्डितान् पाठनार्थं नियोज्य मासिमासि तत्तत्कुटुम्बभरणयोग्यद्रव्यदानै पठनपाठनव्यापारेण ता शाला शब्दब्रह्ममयीमकरोत् ॥

तदानीं धर्माधिकारी कुम्भकोणशेषाचार्य धर्माधिकारी चक्रवर्त्यय्यगार्यश्च प्रसिद्धौ वैयाकरणौ चामराजास्थानमलङ्कुरुत स्म ॥

इदानीं तत्सूनुना सद्गुणशेवधिना राजर्षिणा *श्रीमन्नाल्वडि कृष्णराजेन्द्रसार्वभौमेन अस्या पाठशालाया पूर्वावस्थातोऽप्यतिशयितवेतनप्रदान-अध्येतृविद्यार्थ्यानुकूल्यसपादन पण्डितरत्नादि बिरुदप्रदानरूपप्रोत्साहनादिना सभाविता पण्डितवर्या विद्यार्थिनश्च तद्विषयेऽत्यन्त कृतज्ञाः कृतार्थाश्च प्रत्यह तमाशीर्भिरवितथाभिराशासत इति सर्वमनवद्यम् ॥



## ज्योतिश्शास्त्रम्.

वेदविलोचनमवनौ त्रिस्कन्धं ज्यौतिषं हि यदुपज्ञम् ।
स जयति मरीचिमाली लक्ष्मीधाम्नो निकेतनं भगवान् ॥

न दैवं न पित्र्यं च कर्मादि सिद्ध्येत्
न यत्रास्ति देशे ननु ज्यौतिषज्ञः ।
न तारा न चारा नवानां ग्रहाणां
न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥

इति ज्यौतिषज्ञैः कृतं तिथिनक्षत्रग्रहचारादिदर्पणं पञ्चाङ्गं विना न भरतखण्डनिवासिनामार्याणां कर्माणि सुसाधानि भवन्ति । न कर्माचरणं विना वर्णाश्रमधर्मास्सिद्ध्यन्ति । अतः कर्मानुष्ठानाय ज्यौतिषशास्त्रज्ञानमावश्यकमिति स्पष्टम् ॥

यदा च वेदाः ऋषिभिर्दृष्टास्तदैव ज्योतिश्शास्त्रमपि समभवदिति ज्ञायते । 'कृत्तिकास्वग्निमादधीत' इत्यादिश्रुत्या कृत्तिकासु सूर्यचारकालेऽग्न्याधानं विहितम् । कृत्तिकासु सूर्यस्य चारश्च ज्योतिश्शास्त्रं विना दुर्ज्ञेयः । किंच—

उत्तरायणदक्षिणायनयोर्लक्षणभूता अहोरात्रयोर्यथाक्रमं वृद्धिह्रासह्रासवृद्धयस्स्पष्टं तैत्तिरीयब्राह्मणे (III 10, 4) निगदिता दृश्यन्ते । एतेन वेदेषु न कुत्रापि उत्तरायणदक्षिणायनयोः स्थूलमपि लक्षणं निर्दिष्टं दृश्यते इति यत्कैश्चित्पाश्चात्यविद्वद्भिरुक्तं तन्निरस्तं भवति ॥

घर्मवृद्धिरपां प्रस्थः क्षपाह्रास उदग्गतौ ।
दक्षिणे तौ विपर्यस्तौ माघश्रावणयोस्सदा ॥

इति वेदाङ्गज्यौतिषेऽप्येतल्लक्षण स्पष्टमुक्त वर्तते—

प्रपद्येते श्रविष्ठादौ सूर्याचन्द्रमसावुदक् ।

सर्पार्धे दक्षिणार्कस्तु माघश्रावणयोस्सदा ॥

इति तत्रैव स्पष्टमुक्तम् । अयनचलनवशान्न माघश्रवणयोर्नापि श्रविष्ठाश्लेषार्धयोरिदानीमुदगयनदक्षिणायने सम्भवत । सूर्यप्रज्ञप्तौ जैनग्रन्थे दक्षिणायनमाश्लेषार्धात्पुष्यनक्षत्रमगमदित्युक्तम् । वराहमिहिरकृतबृहत्संहिताया पुनर्वसुनक्षत्र सवितरि समागते दक्षिणायनमभवादिति निर्दिष्टम् । तदित्थमयनचलन क्रमान्नक्षत्रान्नक्षत्रान्तरे समभवदिति पूर्वोक्तैर्गमकै भरतखण्डनिवासिनो मौहूर्तिका ग्रहचारगणने पटवस्समभवन्निति बाढमाकल्यते ॥

तिथिनक्षत्रयोगकरणानि कर्मोपयुक्तानि भरतखण्ड एव केवल दृश्यन्ते । न तान्यन्यदेशेषूपयुक्तानि । सप्तदिनात्मकवारव्यवहारस्तु सार्वत्रिको वर्तते, स च न ग्रहगत्यधीन किंतु कल्पित । एव योगकरणे च कल्पिते एव । तिथिस्तु चन्द्रचाराधीन इति न तस्य कल्पितत्व वदन्ति । एव सूर्यादिसप्तग्रहाणा चारा यत्र शास्त्रे यथावन्निष्कृष्यन्ते तच्छास्त्र ज्योतिस्सिद्धान्तशास्त्रमिति कथ्यते । यत्र च ग्रहचारवशान्मनुष्याणा सुखदु खे सम्भवत इति शुभाशुभफलमनुमीयते तच्छास्त्र फलशास्त्रमिति कथ्यते ॥

सूर्याचन्द्रमसौ खमण्डले सञ्चरत इति सर्वविदितमेव । तत्र सूर्ययानमार्ग सूर्यक्रान्तिमण्डलमिति चान्द्रयानमार्ग चान्द्रचारमण्डलमिति च व्यवह्रियते । तन्मण्डल दीर्घवृत्ताकार वर्तते । तद्वृत्त सप्तविंशत्या अश्विन्यादिनक्षत्रै समान्तरमङ्कितमिति गणनार्थमुपाय कृत । किंच तद्वृत्त षष्ट्युत्तरत्रिशतांशै विभज्य प्रथम त्रिंशदशपरिमित भाग वृषभ इति एव क्रमेण व्यवहरन्ति ॥

म्लेच्छा हि यवनास्तेषु सम्यक्छास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद्द्विजः ॥

इति हायनरत्नपरामृष्टाया गर्गोक्ते —

ब्रह्मद्वेषितुरुष्कसम्भवमिदं तैर्थीयकं वर्तते
शास्त्रं यद्यपि सद्द्विजैरपि तथाप्यध्येतुमर्हं भवेत् ।
यस्माद्यत्सदसत्फलं निगदितं सत्यं हि किं पङ्कजे
शङ्का पङ्कभवा तथा फणिफणोत्पन्ने मणौ दूषणम् ॥

इति हायनरत्नपरामृष्टगणेशदैवज्ञवचनाच्च यवनोपज्ञं बाबिलोनिय रोमकादिदेशोपज्ञं च ज्योतिश्शास्त्रमार्योपज्ञज्योतिश्शास्त्रेण संमिलितं सत्परां वृद्धिं भरतखण्डे प्राप्नोदिति वदन्ति ॥

वराहमिहिराचार्यकृतायां पञ्चसिद्धान्तिकायां रोमकसिद्धान्तोऽपि परिगणितो वर्तते। आर्यसिद्धान्तं वसिष्ठसिद्धान्तं ब्रह्मसिद्धान्तं सूर्यसिद्धान्तं रोमकसिद्धान्तं इति प्राचीनास्सिद्धान्ता जाग्रति । ज्योतिश्शास्त्रेषु आर्यभटो नाम विद्वान् वराहमिहिराचार्यश्च प्रसिद्धौ ग्रन्थकर्तारौ क्रिस्ताब्दानां पञ्चमषष्ठशतकान्तयोस्समभवतामिति ज्ञायते । वराहमिहिराचार्येण कृतं बृहज्जातकं फलशास्त्रज्ञानायेदानीमपि बहुभिरधीयते ॥

पुरा शङ्कुच्छाया नक्षत्रदर्शनमिति द्वावुपायौ ग्रहचारनिर्णयायोपायुज्येताम् । शङ्कुच्छायामानं दोषं विना दुस्साधम् । यन्त्राद्यसहकृतेन नेत्रेण नक्षत्रदर्शनमपि न सुसाधमितीदानीं पाश्चात्यैर्विद्वद्भिः बहुविधानि यन्त्राणि कल्पितानि । ग्रहचारनिर्णयाय च उन्नतानि नक्षत्रसदनानि च तत्र तत्र भूरिद्रव्यव्ययेन कल्पितानि वर्तन्ते । भरतखण्डनिवासिनामेतादृशोपकरणाभावात् ज्योतिस्सिद्धान्तशास्त्रमिदानीं नात्यैधमानं विद्यते ॥

पुरातनैर्वररुच्यादिभिर्ज्योतिर्विद्भिः कल्पितानि यानि पदका-

न्यद्योपलभ्यन्ते तान्येवानुरुद्ध्य तिथ्यादिनिर्णयोऽद्य क्रियते । निर्णयश्चाय नक्षत्रसद्नेषु यन्त्रोपकरणसाहाय्येन विद्वद्भि कृतेन निर्णयेन न सम्मितो भवति । अत भरतखडेऽपि तादृश साहाय्यमावश्यकमित्यत्र न कोऽपि सन्देग्धि ॥

आ कदम्बराज्यारम्भकालादा चाधुनातनकालाद्द्विजानामावामस्थानेऽत्र कर्णाटदेशे ज्योतिश्शास्त्रमन्यैश्च शास्त्रैर्बाढम् ध्ययनविषयोभूदित्यत्र न कोऽपि सन्देह । विजयनगरमहाराजेषु कर्णाटदेशमवत्सु विद्यामाधवो नाम दैवज्ञ विद्यामाधवीय नाम मुहूर्तफलप्रदर्शक ग्रन्थ प्राणिनाय । स च ग्रन्थोऽधुनाऽपि विद्यार्थिभिरधीयते । तम्मयार्यविरचितो ग्रहगणितभास्करोद्याऽपि समुपलभ्यते । विद्यारण्यविरचितानि ज्यौतिषग्रन्थकदम्बानि सर्वेषा विदितान्येव । अलसिङ्गार्येण लीलावती व्याख्याता चकास्ति । नरसिंहघनपाठिना रचित ग्रहणदर्पण केन नाभिनन्द्यते । श्रीमता तृतीयेन कृष्णराजेन श्रीतत्वनिधौ ज्योतिश्शास्त्र स्पष्ट बालबोधाय विवृत वरीवर्ति । सङ्ख्यारत्नकोशादयो ज्योतिर्ग्रन्थास्तेनैव महाराजेन विरचिता समुपलभ्यन्ते । जातकफलकथने प्रश्नफलकथने च श्रीकृष्णराज इव नान्यो दैवज्ञो निपुणस्समभवदिति विद्वासो वदन्ति । तर्कवाचस्पते कुणिगल् रामशास्त्रिण द्वितीयपुत्रस्य जातकमाकलय्य ‘प्रसिद्ध परिव्राड्राजहसोऽय भविष्यति’ इति श्रीकृष्णराजेनोक्त यत् वचन तत् सत्यमभवादिति सर्वेषा विदितमेव । स एव षष्टिवार्षिकतिथिपत्राणि विरच्य सशोध्य ग्रहणसमयान् यन्त्रै परीक्ष्य च ज्योतिस्तत्र महीयसीमुन्नतिं प्रापयदिति वृद्धमुखादवगम्यते । इदानीं च पाठशालायामस्या बहवश्शिष्या ज्योतिश्शास्त्रमधीयाना विद्यन्ते ॥

अनुकलविजृम्भमाणप्रेमभरोत्फुल्लमानसौ सुचिरम् ।
सुप्रजसौ विजयेता चिरायुषौ कृष्णराजयुवराजौ ॥

## मीमांसा

शास्त्रमिदं वेदार्थविचारात्मकम् । वेदश्च कर्मकाण्डज्ञानकाण्डात्मकोभयभेदभिन्नः । तत्र कर्मकाण्डात्मकपूर्वभागे तावत्कर्मविचारः कृतः । ज्ञानकाण्डात्मकोत्तरभागे च ब्रह्म विचारितम् । वेदार्थविमर्शनपूर्वकं पूर्वभागे कर्मस्वरूपनिरूपणादेवास्य शास्त्रस्य पूर्वमीमांसेति व्यवहारः । एतच्छास्त्रीयक्रमेणैवोत्तरमीमांसात्मकवेदान्तशास्त्रेऽप्यधिकरणरचना कृता । एतच्छास्त्रसिद्धन्यायानामेव तस्मिन्नपि शास्त्रे तत्रतत्राभ्युपगमः कृतः । अतएवेयं पूर्वमीमांसा उत्तरमीमांसाया अत्यन्तोपकारिणी ॥

अलौकिकश्रेयस्साधनधर्मविचाररूपमिदं शास्त्रं षोडशाध्यायपरिमितम् । आदितः द्वादशस्वध्यायेषु क्रमेण धर्मप्रमाण—धर्मभेद—अङ्गाङ्गित्व—प्रयोज्यप्रयोजकभाव-क्रम—अधिकारि—सामान्यातिदेश—विशेषातिदेश—ऊह—बाध—तन्त्र—प्रसङ्गाः प्रदिपादिताः ॥

उपरितनाध्यायचतुष्टयेन सपरिकरं देवताविचारणं कृतमितीयं मर्यादा कार्त्स्न्येनास्य पूर्वमीमांसाशास्त्रस्य ॥

अस्मिंश्च शास्त्रे वृत्ति भाष्य वार्तिक टीका पञ्जिका विवरण दीपिका कौस्तुभ रहस्य प्रभृतयः प्रबन्धाः सर्वशास्त्राणां सर्वन्यायानां सर्ववाक्यार्थानां सर्वसिद्धान्तानां च मूलस्तम्भभूता विराजन्ते ॥

दुरवगमातिविपुलतत्तन्न्यायजटिलपरस्सहस्रविषयपरिगुम्भितस्यास्य शास्त्रस्य प्रवक्तारः प्रबन्धप्रणेतारश्च पूर्वमासन्नस्मिन्देशे । तत्र वाञ्छेश्वरीनाथनामा महापण्डितः भाट्टचिन्तामण्याद्यनेकप्रबन्धकर्ता सत्याषाढकल्पसूत्रव्याख्याता च सर्वविश्रुतः ॥

धर्मशास्त्रवेदान्तशास्त्रलौकिकतत्तन्न्यायाद्युपकारकतया एतच्छा-स्त्राध्ययनस्यात्यन्तावश्यकत्वं मन्यमानानां सरस्वतीप्रासादमहापाठशा-लाप्रधानाध्यक्षपदवीमनुमन्यमानानां न्यायवेदान्तमीमांसादिसकलशास्त्र-पारावारायमाणहृदयानां श्रीरङ्गनाथब्रह्मतन्त्रपरकालस्वामिनां सन्तोषं समा-कलयद्भिः श्रीमत्कर्णाटकदेशाधीश्वरैः श्रीमच्चामराजेन्द्रसार्वभौमैः अस्यां स्वेन प्रतिष्ठापितायां पाठशालायां एतच्छास्त्राध्ययनाध्यापनादिविषयेऽत्यन्त सौकर्यसंपादनद्वारा प्रथमतः पञ्चत्रिंशद्वत्सरेभ्यः प्रागेतदध्वरमीमांसाध्या-पने ब्रा॥ श्री॥ केताडपट्टि गीताचार्याः श्रीकृष्णगङ्गाभ्युदयाद्यनेककाव्य-रचनाकुशलाः कविकुलशिरोमणयः नियमिताः। तदनु तर्कतीर्थपण्डि-तरत्नेत्याद्यनेकबिरुदाङ्कितैः षड्दर्शनीपारदृश्वभिः श्रीमद्भिः कस्तूरिरङ्गाचा-र्यैः सामस्त्येनैतच्छास्त्रमध्यापितमासीत्। तैरेव चाचार्यवर्यैर्जैमिनिसूत्राणि भट्टमतानुसारेण सुलभशैल्या बह्वर्थप्रतिपादिका सारबोधिन्याख्या काचि-द्वृत्तिर्व्यरचि ॥

सा च महीशूरराजकीयप्राच्यकोशागारे मुद्रिता जागर्ति। तदाचार्यसकाशादेवाधीतैतच्छास्त्रमर्यादाः पण्डितवराः इदानीमस्यां महा-पाठशालायामेतच्छास्त्रं प्रचारयन्तो विद्यन्ते ॥

अधुना महाराजनाल्वडि श्री॥ कृष्णराजेन्द्रसार्वभौमैः प्रबल-प्रोत्साहनादिना विशेषतः परिपोष्यमाणमेतच्छास्त्राध्ययनाध्यापनादिकं इतोप्यतिशयितप्रकारेण अभिवर्धतामिति सर्वं सुस्थम्॥



## साहित्यम्

जगदावर्जनचतुरा जयतुतमा साहिती जगन्मधुरा ।
परिमुषितेतरभावा परित परिशीलयन्ति या कवयः ॥

हृदयङ्गमेषु चिन्ताकुलितचेतोरसायनप्रायेषु वाङ्मयेषु किमपि रमणीय नाम साहित्यमिति । मनोज्ञभावाविष्करणपटुतरसूक्तिरूपेण विजयमान साहित्य निखिलविमर्शकशिरोलाल्यमिति शतशोऽपि कथन नातिशयोक्ति । अस्य चेदृशीमुन्नतिं हृद्यतररसपरिकरा इव पानकस्य वाङ्मयप्रपञ्चे निलीनास्ते ते दार्शनिका आनुभविका कलासम्बन्धिन' अन्ये चापि रमणीयतरा अर्था एव साहित्यपदनिवेदिता निस्सन्देहमाचक्षते । तस्यास्य साहित्यस्य रसानुभवसमुचितो मार्गे काव्यनाटकलक्षणग्रन्थाद्यात्मना परित प्रचरति परमर्ष्युपज्ञ निष्कण्टक भारतमण्डले। काव्यानि च काळीपरमप्रसादमूर्ते काळिदासस्य दण्डिन बाणस्य सुबन्धोरिति च परस्सहस्राण्येव जगति प्रकाशन्ते ।

अङ्गोपाङ्गैस्सुविशदमपि विज्ञानसन्मणिम् ।
रमणीयवचोबन्धे विन्यस्यामोदमादधु ॥

बालकैर्बुद्धिप्रकर्षाय विवेकाय चाधीयमानासु विद्यासु प्रभुसम्मिता वेदास्सुहृत्सम्मितानि पुराणानि कान्तासम्मित काव्यमिति सरसानि काव्यान्येवाधीयन्ते । काव्यरचनाज्ञान हि राजचरितरचनायै राजशासनलेखनाय चोपयुज्यते । पुरा कदम्बवशमुक्तामणिषु राजसु शीमोगाप्रान्तस्थ वैजयन्तीपत्तनमधिष्ठाय महीशूरदेश शासत्सु—

श्रीशान्तिवर्मनृपते वरशासनस्थ
कुब्जस्स्वकाव्यमिदमश्मतले लिलेख

इति तालगुन्दशासने उपान्त्यपद्य दृश्यते । एतच्छासनगतानि पद्यानि कालिदासादिकृतपद्यानीव हृद्यानि दृश्यन्ते—

गुप्तादिपार्थिव कुलाम्बुरुहस्थलानि
स्नेहादरप्रणयसम्भ्रमकेसराणि ।
श्रीमन्त्यनेकनृपषट्पदसेवितानि
योऽबोधयद्दुहितृदीधितिभि नृपार्क ॥

इतीद सावयवरूपकालङ्कारालङ्कृत पद्य कदम्बान्वयचूडामणे काकुत्स्थवर्मण गुप्ताना च राज्ञा परस्पर वैवाहिक सम्बन्ध निर्वक्ति ॥

कदम्बराजेभ्य उत्तरस्मिन्काले ये गागा राजान महीशूरदेशमाशिषन्, तेषा च शासनान्यप्युत्तमकाव्यशैल्यैवालिखितानि दृश्यन्ते। हेब्बूरुताम्रशासने गङ्गान्वयतिलक दुर्विनीतो नाम राजा रूपावतारकार देवभारतीनिबन्धबृहत्कथ किरातार्जुनीय पञ्चदशसर्गटीकाकार " इति वर्ण्यते। पुरा राजानोऽप्यधीतकाव्या काव्यव्याख्यातार काव्यप्रणेतारश्चाभूवन्नित्यनेन शासनेन निस्सन्देह ज्ञायते। हरिहरशिलाशासने महीशूरदेशचक्रवर्तिना होय्सलवशाब्धिसोमेन सोमदेवेन निर्मिता सोमनाथनगरीत्थ वर्ण्यते—

क्वापि क्वापि नयावलीपरिमिलन्मीमासया मासला
क्वापि क्वापि च तर्ककर्कशवचोवीचीनिचोलीकृता ।
क्वापि क्वापि च शब्दयज्ञकवितासवावदूका शुका
श्रीविद्यानिधिसोमनाथनगरी सा भाति भूषा भुव ॥

न केवल काव्यरसास्वादमग्ना कवयोऽपितु मीमामका शाब्दिकाश्च होय्सलवशमुक्तामणिभी राजभिस्सरक्षिता शास्त्रमीमासामिव काव्यमीमासामपि व्यतन्वन्निति बाढ ज्ञायते ॥

होय्सलेभ्यश्चोत्तरस्मिन्काले विजयनगराधिष्ठात्रा श्रीमत्कृष्ण-राजेन महीशूरसंस्थानाधिपतिना महीशूरदेशे विद्याविवृद्धिमभिसंधाय विद्वद्भ्यः कृतानि दानानीत्थं हुरगलवाडीताम्रशासने प्रशस्यन्ते—

काची श्रीशैल शोणाचल कनकसभा वेङ्कटाद्रिप्रमुख्ये-
ष्वावृत्त्यावृत्त्य सर्वेष्वतनुत विधिवत्भूयसे श्रेयसे य ।
देवस्थानेषु तीर्थेष्वपि कनकतुलापूरुषादीनि नाना
दानान्येवोपदानैरपि सममखिलैरागमोक्तानि तानि ॥

पुरा खलु वेदादिविद्यापाठनार्थं तत्तद्विद्यावरिष्ठाना विदुषा शालैव पाठशाला समभवत् । तदीदृशोपाध्यायाना निष्किंचनाना जीविकासौकर्याय राजानः करदण्डबल्यादिराजदेयविरहिता वृत्तीर्विद्वद्भ्यो व्यतरन्निति पुरातनराजशासनेभ्योऽवगम्यते । पुराकृतानि विद्वद्दानानि विद्वद्वेतनस्थानीयानि विद्याप्रवृद्धये प्राभवन्निति हि वस्तुतत्त्वम् ॥

तदिद यदुवशपयःपारावारसुधांशुना महीशूरदेशभूपालतिलकेन श्रीमता कठीरवनरसिंहराजेन वितीर्णाना वृत्तीना स्तुत्या मेलुकोटेताम्रशासनगतया बाढ ज्ञायते । यथा—

वेदाः प्रमाण सकलद्विजाना धर्मस्य मूल त्विदमेव नान्यत् ।
तस्मात्तु वेदत्रयबोधनाय चकार वृत्तिद्वयमत्र भूपः ॥ इति ।

अपिचास्य जनपदस्य नेयमद्यतनी विद्वदधिष्ठानप्रतिष्ठा । सरस्वतीविहारविलाससौधः खलु कर्णाटनीवृत् । यथाह तत्रभवान् वेदान्ताचार्य सङ्कल्पसूर्योदये—

लक्ष्मीकौस्तुभलक्षणेन वपुषा वाच विनैव स्वय
श्वेतद्वीपनिवसिनामिव दिशन् सतोषमन्तर्मुखम् ।
विद्यावीचिसहस्रसभ्रममिलद्दुग्धार्णवाडम्बरे स्थान
सयमिसार्वभौमविजयस्थाने विधत्ते हरिः ॥

इति । यथाह च श्रीशैलकवि —

शमयति जडिमान सौमनस्य प्रसूते
सकलकरणशिक्षाकौशलानि व्यनक्ति ।
सकृदपि चिकदेवक्ष्माभृदास्थानसीमा
परिगतबुधगोष्ठीप्रान्तपङ्क्तिप्रवेश ॥

इति । यदाह स एव स्मृतिसुधारम्भे—

प्रौढेनाप्रतिमेन वीरचिकदेवेन्द्रेण बाल्यात्प्रभृ-
त्यैकान्त्यात् निजनिर्विशेषमनघा वृद्धि समारोपित ॥

इति । अन्ये ते जनपदा , अन्योऽय कर्णाटदेश । यत्र महिला अपि अधरीकृतविरञ्चिमहिला विदुष्य कवयश्चासन् । यदाह कविराज राजशेखर —

सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ ।
या वैदर्भगिरा वास कालिदासादनन्तरम् ॥
नीलोत्पलदलश्यामा विज्जाका तामजानता ।
वृथैव दण्डिनाऽप्युक्ता सर्वशुक्ला सरस्वती ॥

इति । यस्या इय सूक्तिसुधाया विप्रुट्—

एकोऽभून्नलिनात् ततश्च पुलिनात् वल्मीकतश्चापर
ते सर्वे कवयो भवन्ति गुरवस्तेभ्यो नमस्कुर्महे ।
अर्वाञ्चो यदि गद्यपद्यरचनै चेतश्चमत्कुर्वते
तेषा मूर्ध्नि दधामि वामचरण कर्णाटराजप्रिया ॥ इति ॥

ततश्च श्रीरङ्गपत्तननिवासिना वेङ्कामात्येन (प्रधानि वेङ्कप्पय्य) प्रणीता नाटक, प्रकरण, भाण, प्रहसन, डिम, व्यायोग, समवाकार, वीथी, ईहामृगाद्या प्रबन्धा असख्या उपलभ्यन्ते ॥

तेनैव तुरीयाश्रमे चिन्मयमुनिनामधेयेन प्रणीत शारीरकमीमांसाभाष्य द्वात्रिंशत्सहस्रग्रन्थपरिमित प्राचीनविष्णुभाष्यस्य सक्षिप्तस्य विकासरूप समुपलभ्यते । तत्र हि जगतस्सत्यत्वमङ्गीकृत्य अद्वैत निर्णीतमस्ति ॥

श्रीमति तृतीये कृष्णराजमहाराजे महीशूरदेश शासति तार्किकमीमांसकशाब्दिकमौहूर्तिकैर्विद्वद्भिस्साक बहव प्रसिद्धा कवयश्च तदास्थानमलमकुर्वन्निति सर्वेषा विदितमेव । गरळपुरिशास्त्रिनामा कवि रामायणस्य युद्धकाण्ड चम्पूप्रबन्धरूपेण व्यरचयत् । श्रीनिवासनामाऽपर कवि कृष्णराजप्रभावाभ्युदयकाव्यमकरोत् । भागवतकृष्णकविना कृष्णराजाभ्युदयो नाम काव्य व्यरचि । श्रीमता कृष्णराजेनापि कृतमार्यारामायणमिति काव्य सहृदयहृदयाह्लादमुपलभ्यते । वेदान्तवादावळी-न्यायभास्कर–सिद्धान्तसिद्धाञ्जन–कृष्णराजकलोदयाद्यनेकप्रबन्धप्रणेता श्रीमान् यदुगिरि-अनन्ताचार्यनामा विपश्चिदपश्चिम सस्थानालकारप्रायस्समासीदिति सुगृहीतमेतत् ॥

श्रीमता केनचित् महानुभावेन नृसिंहनामधेयेन प्रणीत अलकारशास्त्र समग्र कळले नजराजयशोभूषणमिति नाम्ना विश्रुतमत्र देशे समुपलभ्यते । अपिच श्रीमन्महाराज कुलगुरुभि श्री॥ श्री॥ श्रीकृष्णब्रह्मतन्त्रपरकालसयमीन्द्रै परश्शतप्रबन्धप्रणेतृभि विरचित लक्ष्मीसहस्रव्याख्यान हससंदेशव्याख्यान अलकारमणिहाराख्य महान् अलकारप्रबन्ध इत्यादय विश्वविश्रुता विराजन्ते ॥

श्रीमता सुगृहीतनाम्ना गीताचार्येण प्रणीता श्रीकृष्णराजाभ्युदयचम्पू विद्वदानन्दकरी चकास्ति । श्रीमता चामराजनगररामशास्त्रिणा सीतारावणसवादझरीति विरचिता काव्यरचना कस्य वा हृदय नाह्लादयति । तस्य च ज्येष्ठभ्रात्रा श्रीकण्ठशास्त्रिणा यवन-

यामिनीविनोदकथा गीर्वाणभाषाभूषा इव वितेनिरे । कविरत्नबिरु-दाङ्कितेन मण्डिकल्लरामशास्त्रिणा विरचिते ग्रन्थकदम्बे भर्मीपरिणय नाम नाटक मेघप्रतिसन्देश इति काव्य च बहुभिरभिनन्दित विद्योततेतराम् ॥

इदानीमपि श्रीमता कृष्णराजमहाराजेन प्रतिवर्ष क्रियमाणायै काव्यरचनाकौशल्यपरीक्षायै समर्पितेषु काव्येषु बहूनि काव्यानि सहृदयहृदयगमानीत्यभिनान्दितानि दृश्यन्ते ॥

तदित्थ बहो कालान्महीशूरदेशे शास्त्रसाहित्यादि सस्कृतविद्या-वृद्धी राजायत्तैवासीदिति स्पष्ट ज्ञायते । वैदुष्यमेव भरतखडनिवासिना-मार्याणा नागरकतौन्नत्यादर्शे । न तु तटाकानि हर्म्याणि शिल्पकौशल्या-धारभूता देवालया वा । एतानि खलु न चिरस्थायीनि, वैदुष्यमेकमेव हि शाश्वत धनम् । तस्य च रक्षक प्रबन्धजातम् । सप्तसु सन्तानेषु काव्यादिप्रबन्धोऽप्येकस्सन्तान इति स्मर्यते ॥

अतश्च सस्कृतविद्याभिवृद्धितत्परा भरतखण्डाधिवासिनो राजान एव भरतखण्डप्राशस्त्यौन्नत्यहेतव इति वक्तु को वा सन्दिह्यात् । अत एव हि ‘ नाविष्णु पृथिवीपति ’ इति धर्मशास्त्रकारास्समामनन्ति । देवतागुरुराजभक्त्यतिशयाधाने हि न सस्कृतविद्यातोऽन्या विद्या जगतीतले चकास्ति । सस्कृतग्रन्थादौ सामान्येन स्वेष्टदेवतागुरुनमस्कार विना न कोपि ग्रन्थ प्रणीतो दृश्यते । बहुषु ग्रन्थेषु आश्रिता राजानश्च प्रशस्यन्ते ॥

भरतखण्डसमुद्भवाना सर्वेषामपि जनाना शास्त्रराजान्यतराज्ञा-परतन्त्रता धर्मोऽभवत् । यदा वा वेदविमुखा राजानो भरतखण्डे तत्तद्देशाधिपतयस्समभवन् न तदाऽपि भरतखण्डजनाना शास्त्रमर्यादाति-क्रमणे राजाज्ञोल्लङ्घने वा प्रवृत्तिस्समभवत् ॥

धृतमासिकवेतनैरुपाध्यायैरधिष्ठिता पाठशाला विनैव परा वृद्धिं प्राप्यैधमाना संस्कृतविद्या सद्यस्स्थापितासु आङ्ग्लेयपाठशालासु पाठ्यमानया आङ्गलभाषाविद्यया स्पर्धितुमशक्ता जीर्णा स्यादिति वा विद्वद्गृहेषु संस्कृतविद्याभ्यासो विद्यार्थिना न सर्वदा सुलभ इति वा श्रीमता चामराजमहाराजेनेय पाठशाला संस्कृतविद्याप्रचारार्थं वहुवित्त-व्ययेन स्थापिता समभवत्

पाश्चात्यविद्याभ्यासोहि ऐहिकसुखाय बाढ प्रभवतीति भौतिका-दिशास्त्राध्ययन बहुधा प्रपञ्चित परा वृद्धिमेधमान दृश्यते। पुरातनाना-मृषीणा दर्शनान्यैहिकसुखविमुखान्यामुष्मिकशाश्वतसुखसाधनबाधेनानीति कतिपयैरेव जनैरिदानीमधीयमान दृश्यते। यथा प्राक् तथाऽद्यापि प्रायस्सर्वे संस्कृतविद्याध्ययनमेव कुर्वीरन्निति विदितवता भगवता निय-मितेन श्रीमता तुरीय श्रीकृष्णराज सार्वभौमेनेय पाठशालाऽतितमा सवर्धिताऽस्ति। ततश्च काव्यशास्त्रादिप्रवचन राजराज्योभयसुखाय सम्पद्यते इति सर्वं भद्रम् ॥



## न्यायशास्त्रम्

तत्त्वस्पर्शिभिरार्जितैरनुभवैस्सजातसीमा मुहु
विद्वद्वृन्दविचारपूरविमल विख्यातचातुर्यकृन् ।
नव्यप्राच्यनिबन्धरत्नरुचिरो नित्य गभीरक्रम
जातो गौतमभूधरे विजयते न्यायप्रवाहो भुवि ॥

सुविदितमेव हि सर्वैर्जगति न्यायो नाम शास्त्र वरीवर्तीति। तदिद इदानी महर्षिगौतमोपज्ञ प्रमेयांशे कणादोपज्ञ च प्रचरतीति निर्विवादम् ॥ तत्पूर्वकालिकवृत्तपरिज्ञानकुशलै तन्मूलभूतमपि न्यायशास्त्रमासीदेवेति तु निर्विवाद स्थाप्येत । दिङ्नागनाम्ना च बौद्धपण्डितेन न्यायसूत्राणि न्यायभाष्य च स्वैरमुदूष्य नव्य एव कश्चिन्न्यायनिबन्ध प्रावर्त्यत प्रमाणसमुच्चयनामा इति हि न्यायभाष्यवार्तिककृतामुद्योतकराणा वच एव निवेदयति । यत स्तैरेवमुक्त स्वग्रन्थस्यादौ—

यदक्षपाद प्रवरो मुनीना शमाय शास्त्र जगतो जगाद ।
कुतार्किकाज्ञाननिरासहेतो करिष्यते तस्य मया निबन्ध ॥

इति । पश्चादपि हि धर्मकीर्ति भदन्त धर्मोत्तर प्रभृतय बौद्धपण्डिता दिङ्नागपरिगृहीत पन्थानमासेदिवास धीप्रचारचातुरी विविधा प्रदर्शयन्तो निबबन्धु । एवविधश्च बौद्धविद्वत्कलह प्रज्ञासागरनाकर्णधारायितैर्जयन्तभट्टवाचस्पतिमिश्र उदयन श्रीधराचार्य व्योमशिवाचार्य प्रभृतिभिर्विद्वत्तल्लजै महता निबन्धेन स्वस्वबुद्धिवैभवप्रकटनपाटवमुररीकृत्य प्रायो निर्वापित एव ॥

प्रतिदिनप्रचुरा हि मतिवैभवसरणि सूक्ष्मसूक्ष्मा ह्यर्था यथोचितन्याय्यनिरूपणमवलम्ब्य प्रचार्यमाणा क्रमेण महदेव वैपुल्यमाप्नुवन्ति जनस्यैकैकस्यापि, बृन्दश प्रयतमानेषु विबुधेषु किमुत वक्तव्यम् ॥

जयन्तभट्टाश्च न्यायमञ्जरीं विरचय्य निरतिशया विद्वज्जनचातुरीं प्रकाशयामासु । इदन्त्वपरमिह वैचित्र्य यन्न्यायमञ्जरीकृत् न्यायशास्त्रमेव विस्तृतविचित्रपदन्यासधन्यया शैल्या नर्तयन्निव व्याचिख्यासु परमतानि निर्मूलयन्नेव मदमत्त इव मातङ्गस्सरसिजवने गहनेऽपि न्यायवने पर्यटाख्ययाऽस्मान् विनोदयति ॥

एव प्रचरति च न्यायशास्त्रे श्रीमान् गङ्गेशोपाध्याय कामप्यभिनवा न्यायविचाररचनामयीं चातुरीं प्रवर्तयामास तत्त्वचिन्तामणिनाम्ना ।

यस्य च चिन्तामणे चिन्तामणेरिव प्रसादात् अद्याप्यविश्रान्त विचारक्रमा जयदेव मथुरानाथ रघुनाथशिरोमणिभिर्भट्टाचार्यै प्रवर्तिता वादप्रवाहा उदभवन् । येषा च धाराभेदा' जगदीश गदाधर भवानन्दप्रमुखानेकतार्किकबृन्दाधिष्ठिताना पूर्वोत्तरपक्षप्रतिपक्षसन्तानदन्तुरिता अद्यापि दुस्सहवेगा एव प्रवहन्ति समग्रे भारतमण्डले ॥

तदेतन्न्यायशास्त्र पूर्वैराजभिश्चिरादेव समुचितेन दृढतरयत्नेन विद्वद्बृन्दानि परिपाल्य निरुद्वेग शिष्यानध्यापयद्भिस्तैर्बहुशास्त्र प्रचार्यमाणमालोकयद्भिर्निरन्तरपरितुष्टै पर्यपोषि ॥

श्रीमता मुम्मडिश्रीकृष्णमहीपालमणिना विद्वद्बृन्दमन्दारेण अगण्यपुण्यभाजनेन सुमहत्तमामुन्नतिमवाप्यत । तथाहि—तेन हि परस्परस्पर्धादुर्धरभणितीना महता विबुधाना विचारगहना समितिं अनुपद प्रवर्तयता, निखिलपण्डितविबुधसभासदनिरतिशयोत्साहप्रवर्तितवादकक्ष्याक्रमापरिभूतमतींश्च शाणघर्षणस्फुरन्मणीनिव विद्वन्मणीन् काङ्क्षिताधिकेन प्रोत्साहेन प्रद्योतयता, निजनिजागणवेदिकासमुपविष्टनिभृताध्यापन-

परितुष्टशिष्यजनतासमानिनद्विगुणोत्साहप्रवचनधूर्वहणधन्याविद्वद्बृन्दयाऽग्रहारप्रदानसरण्या यथार्ह सोत्साह च प्रमोदमानेन अन्यथाऽन्यथश्च विद्वत्सु रमणीय वाल्लभ्यमासेदुषा, विमर्शपदेष्वर्थेषु स्वयमपि कामपि निर्णयानुगुणा रीतिं सहृदयमासाद्य माध्यस्थ्यमपि बहुशोऽङ्गीकुर्वाणेन पर्यरञ्जयन्त, सुमनसस्सुमनस ॥

गच्छति च काले क्रमेण विद्वत्कुलेषु ह्रसिमानमुपक्रामत्सु कर्णाटधरणिसीमन्तिनीललामभूताया गीर्वाणभाषाया पूर्वानुगुणामुन्नतिं समानिनीषुणा श्रीमता चामेन्द्रभूपालमणिना समुचितसौकर्यप्रकल्पनप्रवर्तिताया सरस्वतीप्रासादनाम्न्या पाठशालाया यथाप्रज्ञ कक्ष्याभेदैर्बहुविधै न्यायशास्त्रस्य प्रवचन प्रावर्त्यत । तत्तनयेन श्रीमता तुरीय श्रीकृष्णराजसार्वभौमेन शतगुणमेव प्रोत्साहिता विराजतेतमाम् ॥

तस्या चास्या पाठशालाया अद्ययावत् पञ्चाशत वर्षाणामविकल निरुपप्लव प्रचार्यमाणा पाठनसरणि परस्सहस्रविद्वत्साक्षिकेण दिशाचतुष्टयतोद्घूयमानेन यशसा कोऽप्यसाधारणो ध्वज इव भारतमण्डलस्य विराजते तमाम् ॥



# अद्वैतम्.

अज्ञेभ्यो मतिदायिनी विपदि या सत्रासविध्वंसिनी
वादिव्यूहबिलेशयप्रमथने शक्तिः परा गारुडी ।
मोहध्वान्तविमर्दिनी सुकृतिनां सद्धर्मसंदर्शिनी
सद्विद्याजननी सदा विजयतां श्रीशांकरी भारती ॥

इह खलु पारमेश्वरमायाविलासविलसदुच्चावचकार्यप्रपञ्चे लोके सन्ति बहुधा परस्पर विभिन्नमतयो जीवाः । परममी चिरन्तन-कर्मसंतानसंभ्रान्तचेतसो मा स्म भूवन्निःश्रेयससाधनापरिज्ञानेन वञ्चिता इति संजातानवधिककारुण्यविशेषः श्रीशंकरभगवत्पादाचार्यः समुत्सार्य वैदिकपक्षविपक्षसंहतिं भगवता कृष्णद्वैपायनमहर्षिणा प्रणीतां शारीरक-मीमांसां प्रसन्नगम्भीरार्थपरिपूर्णेन भाष्याभिधानेन स्वीयवाङ्मयेन यथा-वद्विशदय्य जगति समातेने शब्दतस्तात्पर्यतश्च सर्वस्वभूतमखिलश्रुतीनां निर्विशेषाद्वैतसिद्धान्तरहस्यजातम् ॥

तैरेव शङ्करभगवत्पादैः अद्वैतमतप्रचाराय चतसृषु दिक्षु प्रतिष्ठापितेष्वाम्नायपीठेषु प्रधानतमः शृङ्गगिरिश्रीशारदापीठमस्मिन्नेव कर्णाटदेशे सुप्रसिद्धतया जागर्तीति सुविदितमेव सर्वेषाम् । तदि-तरे च श्रीकूडलि शिवगङ्गा रामचन्द्रापुर तीर्थमुत्तूरु आवनि तलकाडु-मठादयोऽनेके विद्यन्त एव । तत्राद्वैतविद्याप्रचारादिसौकर्याय एतत्क-र्णाटदेशाधीश्वरैस्सुप्रथितश्रीमदिम्मडिकृष्णराजेन्द्रप्रभृतिभिरनेकैः प्रभुभिः वृत्तिस्वास्थ्यरूपतया ग्रामक्षेत्रादीन्यनेकानि सर्वतोमुखपरस्सहस्रसुवर्णा-यसपादकानि वितीर्णानीत्यस्मात्प्रमोदावहमन्यत्किमाशास्यमस्ति ॥

इद चाद्वैतसिद्धान्तदर्शन इदानीमुपलभ्यमानेषु ग्रन्थेषु गौड-पादाचार्य भगवत्पादशकराचार्य सुरेश्वराचार्य विवरणकार मण्डन-मिश्र सक्षेपशारीरकाचार्य वाचस्पतिमिश्र आनन्दगिरि चित्सुखाचार्य प्रभृतिभिरनेकै महात्मभि प्रणीतेषु सुस्पष्ट निरूपित प्रतिष्ठापित चेत्येतदपि भरतखण्डसौभाग्यमिति सर्वे विजानन्ति ॥

इहैव कर्णाटदेशे क्रिस्ताब्दीयचतुर्दशशतके विजयनगरसा-म्राज्यप्रतिष्ठापनधुरधर श्रीविद्यारण्ययतीश्वर अधिकरणरत्नमाला अनुभू-तिप्रकाश अष्टोत्तरशतोपनिषद्दीपिका जीवन्मुक्तिविवेक आत्माना-त्मविवेक विवरणप्रमेयसग्रह इत्यादीन् बहून् प्रबन्धानद्वैत प्रकाशनप-टिष्ठान् जग्रन्थ ॥

विद्यापक्षपातिभिस्स्वय विद्वद्भिरेतत्कर्णाटदेशाधीशै पूर्वे श्रीचि-कदेवराजकण्ठीरवनरसराजप्रभृतिभिरनेकग्रन्थनिर्माणनिर्मापणद्वारा अतीव लोकोपकारस्सपादित । महीशूरमहाराजश्रीमन्मुम्मडिकृष्णभूपत्यास्थान-विद्वन्मणिभिस्त्र्यम्बकशास्त्रिप्रभृतिभि श्रुतिमतोद्द्योतप्रमुखाः वेदान्त-न्यायवादा व्यरच्यन्त । बहव शिष्याश्चाध्यापिता. ॥

तदनु श्रीचामराजेन्द्रसार्वभौमैस्तत्सूनुभि प्रतिष्ठापिताया श्रीस-रस्वतीप्रासादपाठशालाया सम्प्रदायनियमानुरोधेन पण्डितवर्यै आस्थान-धर्माधिकारिपण्डितरत्नसुन्दरशास्त्रिप्रभृतिभि शिष्येभ्य भाष्यप्रवचना-दिक निर्वर्तितम् ॥

इदानी श्रीनाल्वडि कृष्णराजेन्द्रसार्वभौमैस्तत्सूनुभिरस्यामेव महापाठशालाया वेदान्तप्रभृतीनामितरासा च कक्ष्याणा स्थापनद्वारा तत्तद्विद्याविशारदाना विद्यानिधि वेदान्तविशारदेत्याद्यनेकबिरुदभूषिता-नामनेकेषा पण्डितप्रकाण्डाना विद्यार्थिना च ग्रन्थपठनपाठनसुखजी-

विकासंपादनं तत्तद्विद्याप्रोत्साहनादिकमितोप्यतिशायितप्रकारेण सर्वं निरवद्यं समपादि संपाद्यते संपादयिष्यते चेति सर्वमनवद्यम् ॥

महाराजश्चायं श्रीकृष्णराजेन्द्रसार्वभौमः सानुजः साश्रितविद्वज्जन-श्चिरायुस्सुखमेधतामिति शम् ॥

नयनानन्ददौ साक्षान्नरनारायणाविव ।
युवराजमहाराजौ युगपत्सुखमाप्नुताम् ॥





श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

To face page 253.

## विशिष्टाद्वैतसम्प्रदायः

अबाधिताशेषवच श्रुतीना
 न्यायैस्तदर्हैरुपवर्णितार्थम् ।
भूयोभिरभ्यर्हितमार्यवृत्तै
 जीयाद्विशिष्टैक्यमत जगत्याम् ॥

सुविशद विदित हीद विद्वद्भि —यत् जीवजातोत्तमेन मानुष-जन्मना प्राचीनविविधपापविनिवर्तनेन समुचित श्रेय आसादयितु स्वाधिकारानुगुण कर्माण्याचरता सपादितपरिपाकेन चेतसा निखिल-लोकनियन्तार दुरधिगमानिजतत्त्व परमपुरुष निर्मल निध्याय कृतार्थी-करणीय आत्मेति समुचित कर्मबृन्दमुपन्यस्यता भगवता वेदेन परम-हितोपदेशिन्य उपनिषद शिरोभूषणानि धार्यन्त इति ॥

सूत्रप्रबन्धानामन्यतम उपनिषत्तत्त्वनिरूपकचक्रवर्ती वरीवर्ति बादरायणसूत्रनिबन्ध । यस्य च शारीरक सूत्रमिति नाम । मीमा-सेति भुवनविश्रुतस्य दर्शनस्याय तृतीयोऽवयव यच्छारीरकमिति । देवताकाण्ड इति कर्मकाण्ड इति च द्वावपरावपि पूर्वावयवौ —श्रूयेते. षोडशाध्यायात्मकौ ययो काशकृत्स्नो जैमिनिश्च प्रणेतारौ प्रथेते । सेय विंशत्यध्याया मीमासेति वेदव्याख्येति च प्रसिद्धि । अस्याश्च मीमासाया प्रथम व्याख्यान बोधायनमुनिप्रणीता कृतकोटिनाम्नी वृत्ति , यस्य चोपवर्ष इति नामान्तरमपि प्रचरति सम्प्रदायप्रथन ॥

शारीरकभागस्य च सुविपुलासु भाष्यपरम्परासु श्री नाथमुनि यामुनमुनि सम्प्रदायमनुरुध्य किमपि निरूपणरमणीय विराजते श्रीमद्रामानुजीय श्रीभाष्यम् । टङ्क–ब्रह्मनन्दिनामान वाक्यकार द्रमिडाचार्यनामान च भाष्यकार पदेपदे गृह्णता गुहदेव भारुचि कपर्दि प्रभृतीश्च पूर्वाचार्यान्निदर्शयताऽनुनाऽऽचार्येणास्य सम्प्रदायस्य प्राञ्चो बहव पूर्वाचार्या अभूवन्निति स्फुट विज्ञायते ॥

अय च सम्प्रदाय श्रीभाष्यकारादनन्तर पराशरभट्टारक श्रीराममिश्र श्रुतप्रकाशिकाचार्य मेघनादारि वात्स्यवरदार्य वादिहंसाम्बुवाह वेदान्ताचार्य रङ्गरामानुजमुनि प्रभृतिभि प्रणीतै परश्शतै प्रबन्धै सर्वत प्रचय गत प्रकाशते ॥

तस्यैव च गुरो वेदान्ताचार्यस्य शिष्यप्रशिष्यपरम्परागता शाखा श्रीब्रह्मतन्त्रपरकालगुरुपरम्परा सर्वोर्वीतलविख्यायमानकीर्ति कर्णाटभूमण्डलकीर्तिपताकायितचारित्रा यादवदकुलनृपतिमणिमहाभाग्यपरिपाकमूर्तिरिव जागर्ति महीशूरराजधान्यामद्यापि । यया च गुरुपरम्परया सुमहदुपकृत विशिष्टाद्वैतसम्प्रदाय प्रति ॥

श्रीमति तृतीये कृष्णराजेन्द्रे च भुवनमवति बहव एव विबुधवरा तिरुवरङ्गमाण्डान् तिरुमलै श्रीनिवासाचार्य–अनन्ताचार्य श्रीरङ्गाचार्य प्रमुखा विशिष्टाद्वैतसम्प्रदाय पर्यभूषयन्त महोद्दामैर्निजनिजै प्रबन्धै ॥

तमेन सम्प्रदाय आजानशुद्ध श्रीमतो दोड्डकृष्णभूपालमणे बहुतरभाग्यपरिपाकफलायित तेनैव बहुशो विदुष परिपोषयता श्री ब्रह्मतन्त्रपरकालगुरुवर्यान्निरन्तर सेवमानेन समेधितसत्वगुणेन परिपोषित श्रीमान् चामराजेन्द्र पूर्वतोऽपि विशिष्टमेव पर्यरक्षत् । एव विधोऽय विशिष्टाद्वैतसम्प्रदाय श्रीमच्चामेन्द्रप्रतिष्ठापिताया "श्रीमत्तुरीय श्रीकृष्ण-

राजेन्द्रपरिपोष्यमाणाया सरस्वतीप्रासादन्याम्न्या पाठशालाया पञ्चविंशति संवत्सराणामारभ्य अनवरत प्रचार्यमाण प्रथते । सम्प्रदायस्वाम्य श्रीमन्त तर्कतीर्थ पण्डितरत्न धर्माधिकारि कस्तूरिरगाचार्या बहूनान-न्तेवासिना प्रवक्तारस्सन्त बह्वीन् प्रबन्धान् प्रणयन्तश्च उपकारक-कुलशिरोमणयोऽभूवन् ॥

सोऽय सम्प्रदाय आस्तिकजनताकल्पद्रुमायमाणेन महीभृन्मणिना श्रीनाल्वाडि श्रीकृष्णराजेन्द्रेण परिपोष्यमाणश्चिरमनुवर्तता जगद्धिताय श्रेयसे इत्याशास्महे ॥

श्रुतीना स्वारस्य सकलचिदचिद्भेदनियति
तपस्यासाफल्य तनुभृति चिरार्चीर्णदुरिते ।
विमुक्ति बन्धाना निरवधिसुखामेव च दधत्
विशिष्टाद्वैत न परमपुरुषानुग्रहफलम् ॥

श्रुतीना विशिष्टाद्वितीयत्वबोधे
व्यवस्थावलम्ब मत योऽभिरक्षन् ।
स्वय सद्विशिष्टोऽद्वितीयश्च लोके
तुरीयस्स कृष्णक्षितीन्द्रोऽभिजीयात् ॥



## द्वैतसिद्धान्तः

सुजनोदधिसंवृद्धिपूर्णचन्द्रो गुणार्णवः ।
अमन्दानन्दसान्द्रो नः प्रीयतामिन्दिरापतिः ॥

पुरा किलास्मिन् भारते वर्षे संस्कृतविद्यापारावारपारीणाः साङ्गवेदाध्ययनेन अध्यापनेन च कालं सार्थकीकुर्वन्तः बहवः पण्डितप्रवराः विनयसौजन्याद्यध्ययनोपयोगिसद्गुणोपेतान् ग्रहणधारणपटून् बहून् शिष्यवटून् अध्याप्य दीपाः प्रतिदीपानिव स्वसदृशान् कुर्वन्तो बभूवुः । ते च वेदविद्यापारगता महात्मानः स्वस्वसमीहितदेवतोपासनेन अभ्युदयादिकं सम्पादयन्तः तात्कालिकैः आस्तिकशिरोमणिभिः महीपतिभिरन्यैश्च तत्सदृशैर्दानमानादिभिस्सत्कारैः पूजिता व्यराजन्त ॥

ततस्सामयिकाचार्या बहून् समयग्रन्थान् व्यरचयन् । यद्यप्येते सामयिकाचार्या अभिज्ञाः, तथापि एतदीयास्सर्वेऽपि सिद्धान्ताः प्रमाणामिति न वक्तुमुचितं, परस्परविरुद्धानामेतेषां प्रामाण्यस्यानुभवविरुद्धत्वात् वस्तुनः विरुद्धधर्मद्वयालिङ्गितत्वप्रसङ्गाच्च । अतः यस्यकस्याप्येकस्य सिद्धान्तस्य प्रामाण्यमभ्युपगम्य इतरेषामप्रामाण्यमेवाकामेनापि वक्तव्यमित्यत्र न हि प्रेक्षावतां विप्रतिपत्तिरस्ति । अथापि एतेषामन्यतमस्य सिद्धान्तस्य प्रामाण्यव्यवस्थापकसामग्र्यभावात् संशयास्कन्दितचित्ताः साधवः पण्डितप्रवराः किमस्माभिः कर्तव्यं कथं वाऽस्माकं पुरुषार्थलाभो भवेत् कश्च तदुपायोपदेष्टेति चिन्ताक्रान्तस्वान्ता एवावर्तन्त ॥

अस्यामवस्थायां एतत्सर्वं जानता सर्वज्ञेन परमकारुणिकेन नारायणावतारेण श्रीवेदव्यासेन पुरुषार्थसाधनमुपदिदिक्षुणा अशेषवेदार्थनिर्णायकन्यायनिबन्धनात्मकं "अथातो ब्रह्मजिज्ञासा" इत्यादिसूत्रस-

मुदायरूप शास्त्र प्रणीतम् । तदिद चतुरध्यायात्मक ग्रन्थजात ब्रह्ममीमासेति शारीरकमीमासेति वेदान्तशास्त्रमिति च प्राज्ञैर्व्यपदिश्यते । अस्य च शास्त्रस्य वायुरेव भगवदाज्ञया रजतपीठपुरप्रान्ते श्रीमध्वाचार्यनाम्ना अवतीर्य सूत्रार्थव्यवस्थापकान् बहून् प्रबन्धान् सुलभया शैल्या निबबन्ध । सूत्राणामर्थवर्णन श्रुत्या श्रुतिवाक्यार्थोऽपि स्मृत्या स्मृत्यर्थोऽपि युक्त्या व्यवस्थापित ॥

अयमेवाचार्यपूज्यचरण योग्यजनाना स्वसिद्धान्तज्ञानाय दशप्रकरणानि उपनिषदा भाष्याणि सूत्रप्रस्थाने भाष्याणीत्येवरीत्या सप्तत्रिंशत्प्रबन्धवरान् प्रथयामास । तदनु स्वसिद्धान्त अभिवर्धयितु रजतपीठपुराख्ये उडुपिक्षेत्रे श्रीकृष्ण प्रतिष्ठाप्य तत्पूजार्थं अष्टौ मठाधिपतीन् यतिवरान् स्थापयामास । अपिच आचार्यपादाना साक्षाच्छिष्या पद्मनाभतीर्थ, नरहरितीर्थ, माधवतीर्थ, अक्षोभ्यतीर्थाख्या चत्वारो यतिवरा श्रीमदाचार्याज्ञया प्रत्येकमेकैक मठ स्थापयित्वा शिष्यानध्यापयन्त सिद्धान्ताभिवृद्धिं व्यधु । एवचाचार्यमहाशयाना काल एव एते द्वादशमठा स्थापिता । तदनु गच्छति काले श्रीमदाचार्यकृताना प्रबन्धाना पद्मनाभतीर्थादय सर्वेपि स्वस्वशक्तिमनुरुध्य व्याख्या वितेनु । तत्र अक्षोभ्यतीर्थाना शिष्य जयतीर्थनामा यतीन्द्र आचार्यकृतप्रबन्धाना व्याख्यान व्यतानीत् । तस्य च टीकेति सज्ञा । एव प्रतिग्रन्थ टीकारचनेनास्य टीकाचार्य इति अन्यदपि नाम समापतितम्

एव द्वैतसिद्धान्तकल्पतरौ समेधिते सति केनापि हेतुना क्रमागते मठे शाखाद्वय समुत्पन्न, तत्रैकस्या शाखाया व्यासराजमठ इति अन्यस्या राघवेन्द्रस्वामिना मठ इति साम्प्रत सज्ञा चकास्ति । त एते सर्वेपि मठाधिपा श्रीजयतीर्थीयटीकाव्याख्यानेन लोकाना महतीमुपकृतिं वितेनु । किंच श्रीमद्रघूत्तमतीर्थ श्रीव्यास-

तीर्थ श्रीमद्वादिराजतीर्थ श्रीविद्याधीशस्वामिप्रभृतय यतिवरा श्रीम द्यादवाचार्य केशवाचार्य प्रभृतय गृहिणोपि पण्डितप्रकाण्डा स्वस्व-शक्त्यनुरोधेनानेकान् टीकाग्रन्थान् व्याचख्यु ॥

एव गच्छति काले यदुवशमुक्तामणिषु महिशूरमहाराजेषु बहवो राजान प्रसक्ताना मठाधिपतीनां तदुपास्यभगवन्मूर्तीना च दर्शनेनातीव सन्तुष्टा भक्तिपारवश्येनानेकान् ग्रामान् ददुरित्येतत्सुप्रसिद्धमेव । किंच श्रीमान् मुम्मडिश्रीकृष्णराज महाराज यत्रकुत्रवा निवसतो बहून् मठाधिपतीन् आहूय श्रीमदुत्तरादिमठाधीशान् होलेनरसीपुरे हेमावतीतीरस्थिते, श्रीव्यासराजमठाधिपतीन् कावेरीतीरस्थिते सोसलेक्षेत्रे, श्रीराघवेन्द्र-मठाधीशान् कपिलातीरस्थिते नजनगूडुनगरे च सर्वानुकूल्यकल्पना-पुरस्सर प्रतिष्ठाप्य शिष्यपरपरासु द्वैतसिद्धान्तमजसा समभिवर्धयितु व्यवस्था वितेने ॥

तदनु श्रीमच्चामराजेन्द्रमहाराज कालवैषम्य जनाना नानाविधे-तिबाधा च अवलोक्य संस्कृतविद्याभिमानिनामुपयोगाय महापाठशाला महिशूरनगरे बेगळूरुनगरे चाकल्पयत् । तत्र नानाशास्त्राणा उत्साहे सत्यपि वेदान्तशास्त्रस्यानुत्साह जानन् श्रीश्रीनाल्वडिकृष्णराजमहाराज पाठशालाया॰ वेदान्तशास्त्राणि पाठयितुमुपाध्यायाना कल्पने मतिं चकार इति सकलविदित विजयते ॥

तदेव कालक्रमेणाशेषमहिशूरमहाराजै परिपोषित शास्त्रकल्प-तरु इतोप्यस्मन्महाराजैस्सम्यक् परिपोषितस्सन् अहरह अभिवर्धता-मिति अनुक्षणमाशास्महे ॥

शमयन् भवसन्ताप रमयन् साधुचातकान् ।
कृष्णमेघ कृपादृष्टिवृष्ट्या पुष्णातु सज्जनान् ॥

॥ श्री ॥

# श्रीमन्महाराजासंस्कृतमहापाठशाला

## पञ्चाशद्वर्षमहोत्सवीया विज्ञप्तिः

---

श्रीमन्महीशूर महाराज तुर्य श्रीकृष्णराजसार्वभौम
समलङ्कृताया महासभाया
श्रीमन्महाराजसान्निधौ विनिवेदिता

---

अथास्मिन् श्रीमहाराज सरस्वतीप्रासादपाठशालाया पञ्चाशद्वर्षमहोत्सवे पाठाशालाकार्यनिर्वाहकसमित्यास्सदस्या वय अस्या पञ्चाशद्वर्षचरित तत्रभवते श्रीकृष्णराजाय तुभ्यमावेदयितु तत्रभवतो भवतोऽनुज्ञा प्रार्थयामहे ॥

सर्वेषु पाठशालापक्षपातिषु प्रमोदभर समुत्साह च जनयन्तीं महोत्सवस्यास्याध्यक्षपदवीमभ्युपगम्यात्रागत तत्रभवन्त भवन्त प्रथमतस्तावद्भूयोभूयो राजभक्तिविनता वय वन्दामहे । सत्स्वपि बहुषु कार्यान्तरेषु तत्रभवान् भवानस्मै महोत्सवाय समागत इति यत् तादिद न केवल पाठशालाया शुभोदर्कं बाढ व्यञ्जयति, अपितु सैषा पाठशाला भवत सदातन्यास्सर्वविदिताया निर्व्याजदयाया पात्रमित्येतदाम्रेडयति ॥

### पाठशालासमुत्पत्ति

श्रीमतस्तृतीयस्य कृष्णराजमहाराजस्य गुरुदेवताभक्तिरौदार्यं चास्या पाठशालाया *मुख्य निदानम् । राजधान्यामस्या तस्य महा-

राजस्य परिपोषणोदग्रया कृपया संस्कृतविद्यायां बाढमेधमानायामपि स महाराज यथावत्पाठप्रवचनसौलभ्यायैकां पाठशालामत्र स्थापयितुकाम रूप्याणां सहस्रं निचिक्षेप। पाठशाला यद्यपि न तदानीं स्थापिताऽभवत्। तथाऽपि तस्य महाराजस्य सोऽयमुदारोऽभिलाषो न विस्मृत। तस्मिंश्च राजेन्द्रे प्रजानां दुरदृष्टवशात् क्रिस्ताब्दानामष्टषष्ट्युत्तराष्टशताधिकैकसहस्रतमे (१८६८) वत्सरे दिवमारूढे रङ्गाचार्यो नाम तदानीं राजप्रासादमन्त्री निरुपयोगान्नसत्रद्रव्यमुपयोज्य पाठशालामेनां सरस्वतीप्रासादनाम्ना अस्थापयत्। प्रथमतावत्तर्कव्याकरणप्रवचनाय द्वावेवोपाध्यायौ अधिकृतावभवताम्। ततोऽचिरादेव ऋग्वेदयजुर्वेदाध्यापनं च प्रावर्ति। आदौ त्रिंशतोऽन्यूनाश्चत्वारिंशतोऽनधिका विद्यार्थिनस्संजाता अभूवन्॥

तृतीयकृष्णराजनाम्नैव तदानीं रचितायामन्नसत्रशालायां पाठशालैषा स्थापिताऽभवत्। तदित्थं समुदञ्चितात्पोद्भवा सेयं पाठशाला पञ्चाशद्वर्षदेशीया चतुर्दशस्वपि विद्यासु सुशिक्षितैः बहुतरैः विद्वद्वृन्दैः परिष्कृतधरणीमण्डला इदानीमपि यथायथं शिक्षामधिगच्छतां पञ्चाशीत्युत्तरद्विशतेन विद्यार्थिनां उपजीव्यभूता विद्यार्थिवासाय रचितया विद्युच्छक्तिदीपिकदीप्तया विंशत्युत्तरशतेन विद्यार्थिभिरध्युष्यमाणया सदनश्रेण्या च शास्त्रार्थाधिगमसौष्ठवातिशये चाद्वितीयकीर्तिं चकास्ति। विद्यावृद्धिश्चेत्थं पाठप्रवचनविवेकेन दृश्यते॥

### पाठप्रवचनक्रम

ऋग्यजुर्वेदौ तर्को व्याकरणं चेति चतस्र एव विद्याः पाठशालासमारम्भकाले प्रवक्तुमारब्धा इति पूर्वमेवोक्तम्। त्र्यशीत्युत्तराष्टशताधिकैकसहस्रतमे (१८८३) क्रिस्ताब्दे सामवेदो वेदभाष्यं धर्मशास्त्रं ज्यौतिषं सङ्गीतं वैद्यशास्त्रं चाध्यापयितुं प्रावर्तिषत। तदुत्तरस्मिंश्च संवत्सरे मीमांसा

शास्त्राध्यापन च प्रावर्ति । ततो वत्सरत्रयोत्तर साङ्ख्यशास्त्राध्ययन च प्रावर्ति । सङ्गीतवैद्यविद्ययोरध्यापनमत्रेतरसम्कृतपाठशालावैलक्षण्येनारब्ध-मपि न चिर तदवातिष्ठत । (१८९०) तमे क्रिस्ताब्दे पाठशालाया क्रियमाणमध्ययन ज्ञेयविषयान्तराणवगमेन सङ्कुचितमिति प्रौढविद्यार्थिभि सोपनिषद्भगवद्गीताऽप्यध्येतव्येति; बालविद्यार्थिभिस्तु कतिचित् वेदमन्त्रा-स्सस्वरमध्येतव्या इति च नियम कृत । तदित्थ क्वचित्क्वचित्पाठक्रम-विपर्यासेन क्रियमाण विद्याबोधन (१९१७) तम क्रिस्ताब्दात् यथावत् प्राचलत् । तदानीं पुन पाठक्रमपरिष्कारायैका समिति राजशासनेन प्रकल्पिताऽभवत् ॥

पुरातनाना शास्त्रविषयाणा क्वचित्सक्षेप, आधुनिकानामा-ङ्गलभाषाभौतिकशास्त्रचरितगणितभाषातन्त्राणा पाठक्रमेऽधिनिवेशन चेत्ये-तद्द्वय समित्या कृतस्य परिष्कारस्य साराश । पुरातनाविद्यया साक आधुनिकविद्याभ्यासाय यद्यपि न बहव सस्कृतविद्वास अस्पृहयन्, तथाऽपि पुरातनविद्याभिराधुनिकविद्याध्ययन सप्रयोजन-मित्यन्तत एतदेव राजशासनानुगृहीतमासीत् । अतश्चेदानीमाङ्गल-भाषा गणितादिक वेदानध्येतारो बाला, वेदाध्येतारश्च देवालय-पूजायै षोडशसस्काराचरणाय चावश्यकमागमशास्त्र प्रयोगशास्त्रवाऽ-ध्याप्यन्ते । एतदानुगुण्येन आगमकक्ष्याऽपि प्रावर्ति ॥

## परीक्षाक्रम

पुरा विद्यार्थिना वार्षिकपरीक्षा अत्रत्याना देशान्तरादाहू-ताना च विदुषा साहाय्येन आस्थानधर्माधिकारिभिरकारिषत । (१८८४) तमे क्रिस्ताब्दे अनेकशास्त्रेषु विद्वत्परीक्षा समारब्धा । परीक्ष्याश्च विद्वासो देशान्तरेभ्योऽप्याययु । परीक्षायामुत्तीर्णाश्च विद्वास

आपञ्चाशद्रूप्येभ्य आ च पञ्चाशदुत्तरद्विशतरूप्येभ्य यथार्हं रूप्यदानेन बहुमानिता अभूवन्। अद्यापि तथैव बहुमान्यन्ते (१८८६) तम क्रिस्ताब्दादारभ्य महाराजप्रासादे प्रचाल्यमाननवरात्रमहोत्सवकाले राज सभायामेव परीक्षायामुत्तीर्णा विद्वांसो महाराजहस्तादेव सगौरव सप्रहर्षं समान लभन्ते। अत्र वाक्परीक्षा हि परीक्षाया प्रधानतमा। तया हि विद्यार्थिना प्रतिभातिशय शास्त्रार्थावगतिश्च बाढ निश्चीयेते। (१९१७) तम क्रिस्ताब्दादारभ्या पूर्वपरामृष्टया राजशासनप्रक्लृप्तया संस्कृतपाठपरीक्षासमित्या परीक्षा निर्वर्त्यन्ते। (१८८४) तम क्रिस्ताब्दादारभ्य अद्ययावत् विद्यार्थिना पञ्च शतानि विद्वत्परीक्षास्वाहत्योत्तीर्णानि सवृत्तानि। एतेषु साहित्ये विद्वास एकषष्टि, वेदान्ते पञ्चविंशत्युत्तर शत, तर्कशास्त्रे एकाशीति, पञ्चपञ्चाशद्व्याकरणे, एकादशोत्तर शत वेदेषु, पञ्चत्रिंशज्ज्यौतिषे, चत्वारिंशदन्यासु विद्यासु। किं बहुना महाविद्वास विद्वास इति च ये महाराजप्रासादे महाराजकृपया मासाशनवेतन स्वीकुर्वन्ति ते सर्वेऽप्यस्या पाठशालायामेव कृतविद्याश्चकासति। देशान्तरादागत्य तेषुतेषु शास्त्रेषु विद्वत्परीक्षायामुत्तीर्णा यथार्हं सम्मानिता विद्वास बह्वोऽप्युपलभ्यन्ते॥

### पाठशालाविद्यार्थिसख्या

कतिपयैरेव विद्यार्थिभिरारब्धय पाठशाला समारम्भात् सवत्सरमध्य एव विद्यार्थिना नवत्या परिवृताऽभूत्। (१८८७) तमे क्रिस्ताब्दे विद्यार्थिना सख्या शतत्रयपरिमिता समभवत्। ततश्च कदाचित्किंचिन्न्यूना जाता। इदानीं पञ्चाशीत्युत्तर द्विशत वर्तते। सत्यपिविद्याभ्याससौलभ्ये विद्यार्थिना पाठशाला प्रत्यनागमे कारणद्वय वर्तते— प्रकृते संस्कृतविद्यावता जीविकाऽलाभ एक., श्रोत्रियकुलपरम्परागताना

वैदिकविद्वत्पुत्राणामपि अङ्गलविद्याभ्यासे परमोत्कटोऽनुरागोऽपर ।
अथापीद तावत्सर्वेषामानन्द जनयति यदस्या पाठशालाया कृतविद्या
स्वविद्याप्रकर्षमहिम्ना सर्वत्र दक्षिणापथे समुल्लसन्तीषु आङ्गलपाठशालासु
सस्कृतभाषाध्यापकपदवीमर्थकरीमलभन्तेति ॥

पाठशालारम्भे विद्यार्थिभ्यो वेतनदान नोपक्रान्तम् । (१८८९) तमे क्रिस्ताब्दे वेतनदानोपक्रम कृत । विद्यार्थिवेतनाय रूप्याणा चतुश्शत प्रतिमास तदानीं क्लृप्तमासीत् । एकैकस्य वेतनस्य रूप्यसख्या तु स्वल्पैवाभूत् । (१९१७) क्रिस्ताब्दे पुन राजशासनक्लृप्तया समित्या प्रतिभाशालिनो विद्यार्थिन यथा सस्कृतविद्याभ्याससमुत्सुका भवेयुस्तथा प्रतिविद्यार्थिवेतन रूप्यसङ्ख्या समधिका कृता । वेतनाय प्रक्लृप्तो रूप्यसमुदयश्च पञ्चत्रिंशदुत्तरैकशताधिकैकसहस्रपरिमितस्समभवत् । (१९२२) तमे क्रिस्ताब्दे तु राज्ये कोशकृच्छ्राद्धेतो स वेतनरूप्यसमुदय पञ्चाशदुत्तरसप्तशतेन परिमितोऽभवत् ॥

## उपाध्याया

पाठशालोपक्रमे तावद्द्वावेवोपाध्यायावधिकृतावभूताम् । वत्सरद्वयानन्तर तृतीयोऽप्युपाध्यायो नियुक्त । क्रमेण अध्याप्यमानाना विद्याना भेदवशादुपाध्यायास्तत्तद्विद्यासु प्रवीणा समधिका नियुक्तास्समभवन् । ततश्चेदानीमस्या पाठशालाया चतुस्त्रिंशदुपाध्याया वर्तन्ते । तेषु त्रयोदश प्रथमोपाध्याया । एकविंशतिस्सहायोपाध्याया । उपाध्यायवेतनानि च पूर्वोक्तया समित्या परिष्कृतान्यासन् । प्रथमोपाध्याया पञ्चाशद्रूप्येभ्यश्च आरभ्य शतावधि प्रतिवत्सर परिवर्धमान वेतन लभन्ते । पाठशालासमितिश्च वैदुष्ये प्रसिद्धानेव विदुष उपाध्यायपदवीमध्यारोपयितुं सततमुन्निद्रा वरीवर्ति । यशस्विनामुपाध्या-

याना नामनिर्देशोऽवश्यकर्तव्य , ये हि नाम स्वसुखनिराभिलाषा विद्याप्रचारायैव जीवन्त स्वकीयपाठनसामर्थ्येन पाठशाला सुप्रथितामकुर्वन्, तेषा नामानि बाढ स्मरणीयानीति एतावतोपरम्यते ॥

## विद्यार्थिनां वसतिभुक्त्युपाया

विद्यार्थिना शतद्वयस्य वसतये विद्यार्थिसदनश्रेण्यामवकाशोऽद्य लभ्यते । विद्यार्थिबाहुल्य इतोऽप्यधिकावकाशपरिकल्पनाय त्वरयति । तेषा भोजनाय नोपायोऽद्यापि कृत । महाराजान्नसत्रे तु तावच्चत्वारिंशतो विद्यार्थिना स्मार्तवैष्णवसम्प्रदायाना भोजनसौकर्य राजशासनानुसारेण प्रकल्पितमस्ति । महाराजाज्ञया चतुर्दश श्रीवैष्णवा विद्यार्थिनश्वेतवराहदेवालये रामानुजकूटे प्रत्यह भोज्यन्ते । अन्ये दरिद्रा देशान्तराद्ग्रामान्तराद्वा समागता विद्यार्थिन धर्मैकतत्पराणा अनेकेषा ब्राह्मणकुटुम्बिनामाथिथ्यमुपजीवन्ति । परकालमठोपि भोजनाय बहुभिस्समाश्रितो वर्तते । तामेना दुर्दशामपनेतु केचन दयाळवो महीशूरपौरा वेदशास्त्रपोषणनाम्ना काचन सभा विद्यार्थिभोजनसौकर्यसम्पादनाय समस्थापयन् । सभयाऽनया धनसङ्ग्रह क्रियमाणो वर्तते । राजशासनेन च (सप्तत्युत्तरशत) (१७०) निवर्तनानि (१०० एकरा ) क्षेत्राणा अल्पमूल्येन सभायै सदय विक्रीतानि वर्तन्ते । सेय सभा अल्पेनैव कालेन यथेप्सित धन सङ्गृह्य बहूना पाठशालाविद्यार्थिनामुपकाराय प्रभवेदित्या [illegible]तरा वर्तते । यद्यदधीतिसौकर्याय विद्यार्थिभिरपेक्ष्यते तत्सर्वं यथाचित सङ्कलित वर्तते । सहस्रद्वयेन पुस्तकाना सकलित पुस्तकभण्डार वृत्तान्तपत्रिकाभिर्मासिकपत्रिकाभिश्चोपशोभितया वाकोवाक्योपन्यासशालया सहात्र समुल्लसति । संस्कृतभाषाया वाक्यार्थोपन्यासकरणप्रावीण्याय विद्यार्थिभि सङ्कलितैका वादपरिषदप्यत्र चिराद्विजम्भते । परि-

षदाऽनयैवोपन्यासान् कर्तुमाहूता बहवो विद्वास प्रतिसवत्सर गणेश-महोत्सवसमये बहून् शास्त्रविषयानाधिकृत्य विवरणोपन्यासानारचयन्ति । सवत्सरद्वयादर्वागेका त्रैमासिकसस्कृतपत्रिका पाठशालयाऽनया प्रकाश्य-माना जरीजृम्भते । पत्रिका चैषा विद्वज्जनमनोरञ्जनी सञ्जातेति वार्ता कस्य वा नानन्द जनयेत् । पत्रिकाक्रेतॄणा सङ्ख्या च पञ्चशत-परिमिता समभवदिति चायमपरस्मतोष ॥

### पाठशालाकोशसम्पत्

आदौ तावत्पाठशालाया धनागम जीर्णान्नसत्रेभ्य सङ्गृहीतोऽ-भवदिति पूर्वमेवोक्तम् । श्रीमति चामराजेन्द्रे कर्णाटसिंहासनमधिरूढे जीर्णप्रणष्टान्नसत्रधनात् पाठशालायै प्रतिवत्सर शतद्वयाधिकसप्तसहस्र-रूप्याणा लाभो यथा भवति तथा धनसाहाय्यमकारि । (१८९२) तमे क्रिस्ताब्दे पूर्वोक्त धनमल्पमिति राजकीयविद्याभ्यासाधिकरणद्वारा प्रतिवत्सर पञ्चशताधिकषट्सहस्ररूप्याणि पाठशालायै देयानीति नियमोऽ-कारि। वत्सरद्वयानन्तर रूप्याणा नवसहस्र देयमिति शासनमकारि । एतच्चाहत्य रूप्याणा षोडशसहस्रपरिमितमभूत् । (१९१७) तमाक्रि स्ताब्दपर्यन्त पठशालाधनपरिमाण यथोक्तमेवावर्तत । तस्मिन्नेव वत्सरे पाठशालापाठक्रमादिपरिष्कारसमित्या पाठशालाधनसमुदय षट्त्रिंश-त्सहस्ररूप्यपरिमाणेनाभिवर्धितस्समजनि ॥

### पाठशालाकार्याधिकरणम्

आदौ तावत्पाठशालाया यावत्कार्यजात महाराजप्रासादाधि-कारिभि धर्माधिकारिसाहाय्येन निर्वर्तितमासीत् । द्विनवत्युत्तराष्टश-ताधिकैकसहस्रतमे (१८९२) क्रिस्ताब्दे पुन पाठशालाकार्यनिर्वाहस-

मिति कृताऽऽसीत् । अस्यास्समित्या प्यालेस्कण्ट्रोलरपदशब्दित महाराजप्रासादाधिकारी अध्यक्षस्समभवत् । अन्यश्च कार्यदर्शी यथाशासन कार्यचालनाय नियुक्त अल्लाडिमहादेवशास्त्री रङ्गाचार्य इति क्रमात्स्मरणीयौ कार्यदर्शीनाववर्तेताम् । इदानीं तावन्महाराजप्रासादाधिकारिणा अध्यक्षेण पाठशालामुख्याधिकारिणा कार्यदर्शिना च समुदचिता सेय समितिरेव पाठशालाकार्यनिर्वाहं करोति । राजशासनद्वारा यद्यत्साहाय्य धनमुखेन पाठशालायै कृत जागर्ति, तत्तद्भूयोभूयोऽवधार्य समितिरिय श्रीमन्महाराजराज्यशासनाय कृतज्ञा वरीवर्ति ॥

प्रारम्भेतावत् पाठशालास्थापक श्रीमान्महाराजमन्त्री रङ्गाचार्य पाठशालायोगक्षेमधुरधरोऽभवत् । ततश्च राज्यसर्वाधिकरणकार्यनिर्वर्तने सतत जागरूक महाराजसचिव शेषाद्र्यार्य पाठशालामेनां दयया पर्यपालयदेधयाचक्रे च । इदानीं च यो महाराजसाचिव अमीनुल्मुल्क् इत्युपाधिधारी मिर्जाइस्मायिल्नामा स मन्त्री पाठशालामेनां दयया रक्षितु बद्धादरो जागर्ति । तस्मै च समितिरिय सतत कृतज्ञा चकास्ति ॥

गतेषु पञ्चाशति वत्सरेषु कर्णाटमण्डले यमुत्कर्षातिशय संस्कृतविद्या समुपनीता, तस्याय पूर्वोक्तस्सङ्ग्रहो यद्यपि प्रमोदाय प्रभवति । तथाऽप्यय प्रकर्ष पुरा निरर्गलोऽभूदिदानीमपि निष्कण्टकश्शुभोदर्क एव स भविष्यतीति नाभिमन्तव्यम् । न हि सा प्रज्ञा, या तु खान्यनवेक्षमाणा ह्र्षकारणान्येव दिदृक्षते । आर्षदर्शनेषु अरुचिरेव संस्कृतविद्याभिवृद्धिनिरोधे प्रबल कारणम् । पुरातनविज्ञानावगमे हि विरागोऽद्य सार्वजनीन । पाश्चात्यविद्याशालास्विव संस्कृतविद्याशालासु विद्यार्थिनां सङ्ख्या नेदानीं प्रवर्धमाना वर्तते । विद्यार्थिनो न संस्कृतविद्याशालायै कथमपि स्पृहयन्ति । न वा प्रतिभाशालिभ्य, सेय विद्या रोचते । तानीमानि

कष्टानि कालक्रमेण प्रगुणितानि भवेयुरिति बाढ दृश्यते । अतश्च प्राचीनार्यदर्शनेषु बालानामुत्कटाऽभिरुचिर्यथाऽभिवर्धेत तथा राज्याधिकृतैर्महाजनैश्च संस्कृतविद्याप्रोत्साहने बद्धपरिकरैर्यतितव्यमिति न कोऽपि सन्देग्धि ॥

अयमपर प्रोत्साहनोपाय —यदत्र पाठशालाया कृतविद्या जना आङ्ग्लपाठशालासु कृतविद्या इव समदृष्ट्या जीवनवृत्त्युपायेषु दर्शनीया इति । इदानीं विद्यार्थीना वसतये यथेप्सितावकाशालाभात् वसतिसदनान्यभिनवानि रचनीयानि वर्तन्ते, पाठशालाविद्यार्थिषु अर्धादपि समधिकाना भुक्त्युपायमलभमानाना बालाना भुक्तिसौकर्याय यत्नोऽपि करणीयो वर्तते एतच्च कार्य धर्मतत्पराणा महतामुदारहृदयाना धर्मधनार्त्किचित्किचित्सङ्गृह्य सुसाधमिति भाति । उपाध्यायानामपि वेतनोत्कर्षस्सम्पादनीय । विद्यार्थिवेतनान्यप्यभिवर्धनीयानि । त इमेऽभ्युपाया पाठशालाया संस्कृतविद्याभिवृद्धये बाढमपेक्षिता वर्तन्ते । राजशासनमपि यथेप्सित पाठशालायै साहाय्य दद्यादिति समितिरियमाशसते ॥

तदित्थ बहो कालात्कर्णाटराज्यमिद संस्कृतविद्याया मातृभवन चकास्ति । यदुवशमुक्तामणिना चामराजादिमहाराजानामास्थानमेतद्यशस्विनामार्षदर्शनपारदृश्वना कल्पद्रुमायते । विद्यापरिपोषणैकतत्परास्ते महाराजा कर्णाटदेशेऽत्र द्वैताद्वैतविशिष्टाद्वैतप्रचारकेभ्यो मठेभ्य. वेदशास्त्रनिष्णातेभ्यश्श्रोत्रियेभ्यश्च अमितायदायकानि ब्रह्मदेयानि मान्यानि पर शता वृत्तीरग्रहाराश्च वेदशास्त्रावबोधनायैव ददुरिति सर्वेषा न केवल विदितमेव । अपितु सततानुभवगोचर एवाय विषय । तेषु च परमोदारेण तृतीयेन श्रीमता कृष्णराजेन्द्रेण यत्संस्कृतविद्याभिवृद्धये सविद्धत्पोषण साहाय्यक प्रदत्त तदिद पाठशालात्मना विजयते। श्रीचामराजे-

न्द्रोऽपि पितु कृष्णराजस्य उदार पन्थानमनुसरन्नार्षविद्याभिवृद्धौ बद्ध-दीक्षोऽभवदित्यत्र सपरिकरपरिष्कृता सैषा पाठशालैव निदर्शनम् । वाणीविलासाभिधानाऽपि महाराज्ञी तमेव धर्मं प्रेम्णाऽभ्यरक्षत् । या चेदानीं पाठशालाया उत्कर्षाधायिका साहाय्यसम्पत्तिस्सत्रभवता भवता कृता; सा सर्वेषा विदितैव ॥

एतानि चान्यानि यदुवंशनृपतीनामुदारचरितानि कृतज्ञतापुरस्स-रमुद्घुष्य पाठशालाविद्वद्भिर्विरचितेय पाठशालापञ्चाशद्वर्षमहोत्सवप्रदीपि-का अस्माभि समितिसदस्यैस्तुभ्य सविनय समर्पिता तत्रभवता भवता सादरं स्वीकृत्यानुगृह्यतामिति वय प्रार्थयामहे ॥

जीयाच्छ्रीकृष्णराजेन्द्रप्रेमातिशयपोषिता ।
आर्षविद्यापाठशाला श्रेयसे जगता सदा ॥
अमन्दानन्दसन्दोहै चिर कृष्णनृपो भुवि ।
जीयाद्यदूद्वहाना च विद्याकल्पद्रुमोऽन्वय. ॥